# आर्यविधानम्

( विश्वेश्वरस्मृतेरुत्तरार्धरूपम् )

भाषाटीकोपेतम्

## प्रथमो भागः

पण्डित विश्वेश्वरनाथ रेउः

# आर्याविधानम्

( विश्वेश्वरस्मृतेरुत्तरार्धरूपम् )

भाषाटीकोपेतम्

## प्रथमो भागः


महामहोपाध्याय-

पण्डित विश्वेश्वरनाथ रेउ-

विरचितम्


पश्चिम-बङ्ग-शासक ( Governor )-

पण्डित कैलासनाथ काटजू-

लिखितया भूमिकयोपेतम् ।




प्रकाशकः

श्री गोवर्धनलाल काबरा

पश्चिम-वङ्ग-प्रान्त-शासक ( Governor )

## पण्डित कैलासनाथ काटजू-

( ऐम० ए०, ऐल० ऐल० डी०, डी० लिट्० )

### महाभाग-लिखिता भूमिका[1]।

अस्ति विश्वेश्वरनाथ रेउ पण्डितः संस्कृतभाषाया विश्रुतो विद्वान् । तेनैष हिन्दू-विधान-विषयको ग्रन्थः संस्कृतभाषायां विरचय्य बहूपकृताः स्वदेशवासिन इति मन्ये । आसीदतीवावश्यकताऽस्य निबन्धस्य । आशासे च यदेतद्विषयानुरागिणां सुमहते समुदायायैष रोचिष्यते । श्रूयन्ते चास्मदीयराष्ट्रभाषाविषयमवलम्ब्य समाचारपत्रेषु सार्वजनिकव्याख्यानमञ्चेषु च सततं विवादाः। परन्तु संस्कृतमेव निखिलानां मुख्यमुख्यानांभारतीयभाषाणां जनन्यस्तीति तु सर्वसंमतमेव। पुराकाले संस्कृतमेव च भारतस्य राष्ट्र-भाषाऽऽसीत् । अद्यत्वेतद् मृतमाधुनिकविचारप्रकटनाक्षमं च समुद्घोष्य राष्ट्र-भाषापदानर्हतादूषणेन दूष्यते । यद्यपि नाहं संस्कृतभाषाविज्ञस्तथाप्युभावपीमौ तर्कौ मां स्वपक्षमाक्रष्टुं नैव प्रभवतः । अश्रौषमहं बहून् विदुषो धाराप्रवाहायितं निर्बाधमस्खलितं च संस्कृतं भाषमाणान् । भाषेयं चोत्तरोत्तरं सरलीक्रियमाणाऽस्ति । मनुष्याणामाशयं विशदयितुमलंकर्मीणां नान्यां भाषां निर्धारये, या दुरूहान्वैज्ञानिकांस्तात्त्विकांश्च विषयानुपयुक्तैः स्पष्टैश्च शब्दैः प्रकटयितुं सुतरां प्रभविष्णुः स्यात् । अस्माकं संस्कृतसाहित्यं केवलं धार्मिकं क्रियाकलापं कर्मकाण्डञ्च विशेषेण संबध्नातीति नितान्तं भ्रम एव। एतादृशोऽपि नाम ग्रन्थाः संस्कृते विद्यन्ते ये गणितं, वास्तुविद्यामोषधिशास्त्रं, वैधानिकं च विषयं विवेचयन्ति । विधानग्रन्थेषूपयुक्तभाषया प्रकटीकृतानां पूर्णरूपिणां यथार्थविचाराणामावश्यकताऽस्ति। अस्मदीयेषु प्राचीनशास्त्रेषु तेषामर्वाचीनासु व्याख्यासु चोपलभ्यमानमस्माकं वैधानिकं साहित्यमेतादृश्या यथार्थताया आदर्श एव।

---

(१) अनूदिता ।

अस्माकीना अङ्गरेजशासकास्तु स्वकीयं भाविनं लाभमेव लक्ष्यीकृत्य हिन्दूनां पारिवारिकेषु प्रबन्धविषयकेषु संबन्धविषयकेषु च विधानेषु हस्तक्षेपं कर्तुं नैव सममन्यन्त । अत एवास्मच्छास्त्राणामेतद्विषयिणो भागा द्रुतमेवेङ्ग्लिशभाषायामनूदितास्त एव च विगतपादोनशताब्दीद्वयतो न्यायालयेषु सूक्ष्मविवेचनाऽऽधारीभूताः सन्ति । एषोऽपि नाम कादाचित्को विचारः केषांचिच्चेतसि स्फुरति, यदस्मदीयाः पुरातना विधानाचार्या आत्मानं तावन्मात्रविषयेष्वेव सीमितवन्तः । किन्तु नैतत्समीचीनम् । अविकलं किल सर्वथा हिन्दू-विधानम् । अधुना सर्वथा स्वायत्ततां बिभ्रति भारतेऽहमाशासे, यदस्माकीना विद्वांसो यथाशास्त्रं पूर्णरूपि हिन्दू-विधानं विश्वस्य संमुखमुपस्थापयितुं प्रयतिष्यन्ते । अद्य यावत्तु यथायुगमावश्यकतामनुसृत्य हिन्दू-विधाननिबन्धा अलिख्यन्त इङ्ग्लिशभाषायामेव । परमाशासे, यदस्मदीयराष्ट्र-भाषाऽपेक्षया अस्या इङ्ग्लिशभाषायाः प्रवर्तमानं प्राधान्यमचिरादेव नङ्क्ष्यति, संस्कृतलिखिताः प्रामाणिका ग्रन्थाश्च विशेषेणोपयुक्ता निर्धारयिष्यन्ते ।

रेउ-महोदयस्य मार्गनिदर्शकमेतत्कार्यं विशेषेण प्रोत्साहनार्हम् । एतत्कृतं विधानस्य विशदं विवरणं विद्वत्तापूर्णं प्रामाणिकं च । अमुना चैतज्ज्ञापितं, यदेतेषामस्मद्विधानानां सरलसंस्कृते संपादनं न दुष्करम् । एतत्सनाथीकृतो हिन्दी-भाषानुवादः पुनर्ग्रन्थस्योपयोगितां वर्धयिष्यति ।

पश्चिमी बंगाल के शासक ( Governor )

## श्रीमान् पण्डित कैलाशनाथ काटजू

( एम० ए०, एल०एल० डी०, डी० लिट्० )

द्वारा लिखी भूमिका ।

पण्डित विश्वेश्वरनाथ रेउ संस्कृत के एक विख्यात विद्वान् हैं । मेरी समझ में उन्होंने हिन्दू-विधान से संबन्ध रखनेवाली इस पुस्तक को संस्कृत भाषा में लिखकर अपने देशवासियों का बड़ा उपकार किया है । इसकी बड़ी आवश्यकता थी और मैं आशा करता हूं कि इस विषय से संबन्ध रखनेवाले पाठकों का एक बड़ा समुदाय इस पुस्तक को पसंद करेगा । हमारी राष्ट्र-भाषा के विषय में पत्रों में और सार्वजनिक व्याख्यान मञ्च पर लगातार वाद-विवाद सुनाई देता रहता है। परन्तु यह तो सर्व-संमत है कि संस्कृत ही भारत की सारी मुख्य-मुख्य भाषाओं की जननी है । प्राचीन समय में संस्कृत ही निश्चयरूप से भारत की राष्ट्र-भाषा थी । आजकल इस भाषा को, मृत-भाषा और आधुनिक विचारों को प्रकट करने में असमर्थ बतलाकर राष्ट्र-भाषा होने के अयोग्य कहा जाता है । यद्यपि मैं स्वयं संस्कृत का पण्डित नहीं हूँ, तथापि ये दोनों तर्क मुझे अपनी ओर आकृष्ट नहीं कर सके हैं । मैंने बहुत से लोगों को धाराप्रवाह की तरह संस्कृत बोलते सुना है और वह भी बिना किसी रुकावट या कठिनता के । यह भाषा उत्तरोत्तर सरल बनाई जा रही है । मनुष्यों के विचारों को प्रकट करने के लिए मैं ऐसी किसी दूसरी भाषा को नहीं जानता जो कठिनता से समझे जानेवाले वैज्ञानिक और तत्त्वज्ञान संबन्धी विचारों को ठीक तौर से उपयुक्त और स्पष्ट शब्दों में प्रकट करने में समर्थ हो। यह सोचना भूल है कि हमारा संस्कृत साहित्य केवल धार्मिक-कृत्यों और धार्मिक-क्रियाओं से ही विशेष संबन्ध रखता है । संस्कृत में ऐसे भी ग्रन्थ हैं जो अङ्कगणित, वास्तु ( गृहनिर्माण ) विद्या, ओषधि शास्त्र और विधान ( कानून ) से संबन्ध रखते हैं । विधान ( कानून ) की पुस्तकों में स्पष्टतया उपयुक्त भाषा में प्रकट किये पूर्णरूप से यथार्थ विचारों की आवश्यकता होती है । हमारे प्राचीन शास्त्रों और उन पर की अर्वाचीन व्याख्याओं में हमारा विधान से संबन्ध रखनेवाला साहित्य इस प्रकार की यथार्थता का नमूना है ।

हमारे अंगरेज़ शासक केवल अपने ही भावी लाभ के लिए हिन्दुओं के पारिवारिक-प्रबन्ध और पारिवारिक-संबन्ध के कानून में हस्तक्षेप करना उचित नहीं समझते थे । इसीसे हमारे शास्त्रों के इन विषयों से संबन्ध रखनेवाले भागों का शीघ्र ही अंगरेज़ी में अनुवाद किया गया और वही पिछले १७५ वर्षों से न्यायालयों में सूक्ष्म विवेचनाओं का आधार रहा है। कभी-कभी यह भी ख़याल किया जाता है कि हमारे विधान शास्त्र के आचार्यों ने केवल इन्हीं विषयों में अपने को सीमित करलिया था। परन्तु बात ऐसी नहीं है। हिन्दू-विधान सब तरह से परिपूर्ण है। जब कि भारतवर्ष अब आज़ाद हो गया है, मैं आशा करता हूँ कि हमारे विद्वान् शास्त्रों के अनुसार पूर्णरूपवाले हिन्दू-विधान को संसार के सामने उपस्थित करने का प्रयास करेंगे। आज तक समय की आवश्यकता के अनुसार हिन्दू-विधान की पुस्तकें अंगरेज़ी भाषा में ही लिखी जाती थीं। परन्तु मुझे आशा है कि हमारी राष्ट्र-भाषा से इस ( अंगरेज़ी ) भाषा की यह प्रधानता शीघ्र ही नष्ट हो जायगी और संस्कृत में लिखी गई प्रामाणिक पुस्तकें विशेष उपयोगी सिद्ध होंगी।

पण्डित रेउ का यह पथ-प्रदर्शक कार्य विशेष प्रोत्साहन के योग्य है। उनका किया विधान का विशद विवरण विद्वत्तापूर्ण और प्रामाणिक है तथा उन्होंने दिखला दिया है कि हमारा विधान सरल संस्कृत में तैयार करना कठिन नहीं है। इसके साथ का हिन्दी अनुवाद इसे और भी उपयोगी बना देगा।



श्रीमान पण्डित मुकुन्दमुरारि रेउ
विक्रम सं० १९०६-१९६१



श्रीमती चान्दरानी रेउ
विक्रम सं० १९२८-१९८१

ययोर्हि पूज्यपादानां प्रसादाद् रचिता स्मृतिः ।
तयोः पित्रोः पदाब्जेषु मयेयं श्रद्धयाऽर्प्यते ॥

जिनके कृपा-प्रताप से स्मृति विरची, स-सनेह ।
उन माता-पितु-चरण पे करूं समर्पण एह ॥

# प्राक्कथनम्

याऽस्माभिर्युगानुरूपं धर्मं व्याख्यातुं विश्वेश्वरस्मृतिः प्रणीता तस्या एवैष उत्तरार्धः । पूर्वार्धापेक्षयाऽऽसन्नचतुर्गुणतां गतोऽप्यस्य विस्तर उपादेयत्वदृष्ट्या नाऽनुचितः प्रतिभाति । यतोऽस्मिन्निःशेषस्यैवाऽऽर्यविधानस्य सांप्रतिकानां रूपाणां सविस्तरं विवेचनं विहितं वर्तते । यथास्थानं चात्र मान्यानां स्मृतिकाराणांतत्तत्प्रसङ्गाभिमतानि मतानि जटिलानां समस्यानामुदाहरणानि च दातुं प्रायत्यन्त ।

क्वचित् क्वचित् पुरोक्तं विषयं पुनरावर्त्य सुतरामचेष्ट्यत दुरूहं प्रसङ्गं सरलयितुं विशदयितुं च ।

यथा ह्यस्याः स्मृतेः पूर्वार्धस्योद्देश्यं परम्परागतस्यार्यधर्मस्य युगानुरूपव्याख्यासाहाय्येनाधुनिकानां समालोचकानां वाग्विषहरणाय जने शक्तिसंपादनं तथैवास्या उत्तरार्धस्य लक्ष्यमार्यविधानानां युगानुरूपव्याख्यासाहाय्येन सांप्रतिकानां वाकीलानां वाकीलनार्थं पुरुषे प्रागल्भ्योत्पादनमस्ति ।

नैतत्साक्षराणामविदितं यन्मनुयाज्ञवल्क्यपराशरादिमहर्षिनामभिः प्रचलिताभिः स्मृतिभिर्मिताक्षरादिभिस्तत्तद्व्याख्याभिश्च प्रतिपादितेष्वार्यविधानेषु देशकालावस्थाप्रभावेण पाश्चात्यानां संपर्केण च सुमहान् विपर्यासः संजातः । अत एव केवलमुक्तानां स्मृतीनां व्यख्यानां चाध्येता महान् पण्डितोऽप्यस्मिन् युग आर्य-विधानसंबन्धिनो विवादास्पदीभूतान् विषयान् न खलु साधिकारं निर्धारयितुं प्रभवति । एतस्या एव त्रुटेर्निरसनायार्यविधानमेतादृशे रूप उपस्थापयितुमस्माभिर्व्यवसितम् । वयं चात्र कियत्साफल्यमधिगता इति तु विदुषामेव परीक्षायत्तम् । परं यद्यनेन ग्रन्थेन संस्कृतवाङ्मये एतादृशस्य युगानुरूपार्यविधाननिबन्धाभावस्यांशेनापि पूर्तिः संभवेत्तर्ह्यस्माभिः सफलो मंस्यते स्वकीयः प्रयासः ।

एतन्निबन्धरचनायां येषां प्राचीनानामर्वाचीनानां च ग्रन्थानां साहाय्यं गृहीतं तत्प्रणेतॄन्प्रति विशिष्टकृतज्ञताप्रदर्शनमप्यस्माकं प्रधानं कर्तव्यमेवेति तदाचरामः ।

अस्य ग्रन्थस्य प्रकाशको रायसाहबोपाधिभूषितः श्रेष्ठिवर्यः श्री गोवर्धनलाल काबरा महाशयः, संशोधको गुरुवर्य-पण्डित-श्री भगवतीलाल महाशयाऽनुजः पण्डितवर्यः श्री नित्यानन्द शास्त्री महाशय-श्चेत्युभावप्येतावस्माकं हार्दिकं धन्यवादमर्हतः ।

अस्यार्यविधानपुस्तकस्याकारस्थौल्यनिराकरणायैवैष ग्रन्थोभाग-द्वये विभक्तः । तस्य चायं प्रथमो भागः । द्वितीयश्चापि शीघ्रमेव .ष्यत

यद्यस्मिन्नभिनवे प्रयत्ने दृष्टिदोषादज्ञानाद्वा यत्र-कुत्रापि यत्कि-ञ्चिन्नामाशुद्धमयुक्तं वा प्रतिभायात् तर्हि तदर्थं कृपया सूचनीयोऽयं जनो, येनागामिन्यामावृत्तौ तद्दोषपरिमार्जनं क्रियेत ।

जोधपुरम्
आषाढ शुक्ल १५, २००५ वि०सं० } विश्वेश्वरनाथ रेउः

# भूमिका

हमने आर्य-धर्म की युगानुरूप व्याख्या करने के लिए जो विश्वेश्वरस्मृति लिखी है, उसीका यह उत्तरार्ध है। यद्यपि यह पूर्वार्ध से करीब चारगुना बड़ा हो गया है, तथापि इसकी उपादेयता को देखते हुए इसका यह विस्तार अनुचित नहीं है, क्योंकि इसमें सारे ही आर्य-विधान ( Hindu law ) के वर्तमान रूपों का विस्तार से विवेचन किया गया है। इसी के साथ इसमें यथास्थान मान्य स्मृतिकारों के मतों के उल्लेख और जटिल समस्याओं के उदाहरण भी देने का प्रयास किया गया है। कहीं-कहीं पूर्वोक्त विषय को फिर से दोहराकर प्रसङ्ग को सरल और स्पष्ट करने की चेष्टा भी की गई है।

जिस प्रकार विश्वेश्वरस्मृति के पूर्वार्ध का उद्देश्य आर्य-धर्म की युगानुरूप व्याख्या की सहायता से पुरुष को आधुनिक समालोचकों का सामना करने में समर्थ करना है, उसी प्रकार उक्त स्मृति के इस उत्तरार्ध का लक्ष्य आर्य-विधान की युगानुरूप व्याख्या की मदद से पुरुष को आजकल के वकीलों से विवाद करने में शक्त बनाना है।

यह बात किसी भी साक्षर पुरुष से छिपी नहीं है कि हमारी मनु, याज्ञवल्क्य, पराशर आदि महर्षियों के नाम से प्रचलित स्मृतियों द्वारा और मिताक्षरा आदि उनकी व्याख्याओं द्वारा निश्चित किये गये आर्य-विधानों में काल और देश भेद के प्रभाव से तथा पाश्चात्यों के संसर्ग से बहुत कुछ परिवर्तन हो गया है। इसलिए केवल उक्त स्मृतियों और उनकी व्याख्याओं का अध्ययन करनेवाला कितना ही बड़ा विद्वान् क्यों न हो, वर्तमान युग में आर्य-विधान से संबन्ध रखनेवाले विवादास्पद विषयों पर अधिकार के साथ कोई मत निश्चित नहीं कर सकता। इसी कमी को दूर करने के लिए आर्य-विधान को इस रूप में प्रस्तुत करने का यह प्रयास किया गया है। इसमें हम कहां तक सफल हुए हैं, इसका निर्णय करना तो विद्वानों का ही काम है, परन्तु यदि इससे संस्कृत वाङ्मय में ऐसे युगानुरूप ग्रन्थ के अभाव की कुछ भी पूर्ति हुई तो हम अपने प्रयास को सफल समझेंगे।

इसकी रचना में जिन मान्य प्राचीन और अर्वाचीन ग्रन्थों से सहायता ली गई है, उनके रचयिताओं के प्रति विशेष रूप से कृतज्ञता

प्रकट करना हम अपना विशिष्ट कर्तव्य समझ कर उनका आभार मानते हैं।

इस ग्रन्थ के प्रकाशक राय साहब सेठ ( शाह ) श्री गोवर्धनलाल काबरा महाशय और संशोधन-कर्ता गुरुवर्य पण्डित श्री भगवतीलालजी महाराज के छोटे भ्राता पण्डित श्री नित्यानन्द शास्त्री महाशय ये दोनों भी हमारे धन्यवाद के पात्र हैं।

इस आर्यविधान पुस्तक के आकार की मुटाई को दूर करने के लिए ही इस पुस्तक को दो भागों में बांट दिया है। उसका यह पहला भाग है। दूसरा भी शीघ्र ही विद्वानों के हाथों को भूषित करेगा।

यदि इस नवीन प्रयत्न में दृष्टि-दोष या अज्ञान के कारण जहां-कहीं जो-कुछ भी अशुद्ध या अयुक्त मालूम दे तो कृपया इस ( लेखक ) को सूचित करने की कृपा करें; जिससे आगे होनेवाली आवृत्ति में उस दोष को दूर कर दिया जाय।

जोधपुर
२० जुलाई १९४८ ई०स०

विश्वेश्वरनाथ रेउ

## विश्वेश्वरस्मृतेरुत्तरार्धरूपस्य आर्य-विधानस्य ( प्रथमभागस्य )

# विषय-सूची


| विषय-संख्या | विषयनामानि | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|
| १ | उपोद्घातः ... ...<br>परिचय | १ | १ |
| २ | व्यवहारोद्भवस्थानानि ...<br>विधानो ( नियमों या कानून ) की उत्पत्ति के स्थान | ३ | १ |
| ३ | दायप्राप्तौ सामान्या नियमाः ...<br>दाय ( हकदारी ) के धन की प्राप्ति में साधारण नियम | ३६ | ७ |
| ४ | दायभागे मिताक्षरोक्तोऽनुक्रमः ...<br>दाय-धन के बांटने में मिताक्षरा मे कहा क्रम | ६८ | १२ |
|  | सपिण्डानां समानोदकानां च सूचना पत्रम्<br>सपिण्डों और समानोदकों का नक्शा |  | १७ |
|  | दाय-प्राप्तिक्रमः ...<br>दाय-धन के पाने का क्रम | ९७ | १८ |
|  | मिताक्षरोक्त-नव-बान्धवातिरिक्ता अन्ये बान्धवाः<br>मिताक्षरा में कहे नौ बन्धुओं के अलावा दूसरे बन्धु | (१६८) | २८-२९ |
|  | दाय-भागे आत्मबान्धवाः<br>दाय-भाग में अपने बन्धु |  | ३४ |
|  | दायभागे पितृबान्धवाः ...<br>दाय-भाग में पिता के बन्धु |  | ३६ |
|  | दायभागे मातृबान्धवाः ...<br>दाय-भाग में माता के बन्धु |  | ३८ |
|  | दायप्राप्तौ विशिष्टा नियमाः ...<br>दाय-धन के पाने में विशेष नियम | २०२ | ४१ |
|  | पृथग्भूय पुनः संसृष्टानां दायविभागनियमाः<br>जुदा होकर फिर से साझेदार बननेवालों के बटवारे के नियम | २२४ | ४४ |
| ५ | स्त्री-दायादाः ... ...<br>स्त्री-हकदार | २३९ | ४६ |

| विषय-संख्या | विषयनामानि | | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|---|
| ६ | महाराष्ट्रीया दायनियमाः<br>बंबई के उत्तराधिकार के नियम | ... | २६४ | ४६ |
| ७ | बङ्गीयाः पुरुषाणां दायनियमाः<br>बंगाल के पुरुषों के उत्तराधिकार के नियम | ... | २७६ | ५४ |
| | बङ्गीयः सपिण्डानां दायप्राप्तिक्रमः<br>बंगाल का सपिण्डों का दाय-धन पाने का क्रम | ... | ३११ | ६१ |
| | पुनः संयुक्तानां दायप्राप्तिक्रमः<br>फिर से साझेदार बननेवालों का दाय-धन पाने का क्रम | ... | ३३६ | ६४ |
| ८ | दायादत्वे मिताक्षरा-दायभागयोर्मुख्या भेदाः<br>हकदारी में मिताक्षरा और दायभाग में के मुख्य भेद | | ३४१ | ६५ |
| ९ | दाय-विभागाभ्यां बहिष्कृतेर्मीमांसा<br>दाय-धन और बटवारे के हक के अयोग्य होने का विवेचन | ... | ३५४ | ६६ |
| | दायच्युतिमीमांसा ...<br>दाय से वञ्चित होने का विवेचन | ... | ३६२ | ६७ |
| | संसृष्टिभागच्युतिमीमांसा ...<br>साझे के बटवारे की अयोग्यता पर विचार | ... | ३७२ | ७० |
| | प्रकीर्णका नियमाः ...<br>फुटकर नियम | ... | ३७६ | ७१ |
| १० | स्त्री-धनानि ...<br>स्त्री-धन | ... | ३८१ | ७१ |
| | स्मृतिषु तद्व्याख्यासु व्यवहारनिर्णयेषु च निर्णीतानि स्त्री-धनानि<br>स्मृतियों में, उनकी टीकाओं में और मुकद्दमों के फैसलों में तय किये स्त्री-धन | ... | ३८१ | ७१ |
| | स्त्री-धनस्य वैशिष्ट्यम्<br>स्त्री-धन की विशेषता | ... | ४५८ | ८३ |
| | स्त्री-धनपरिसंख्यानम्<br>स्त्री-धन की गिनती | ... | ४६५ | ८४ |
| | स्व-स्त्रीधने स्त्रिया अधिकारः<br>अपने स्त्री-धन में स्त्री का अधिकार | ... | ५६० | ९६-९७ |

| विषय-संख्या | विषयनामानि | | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|---|
| | स्त्री-धनस्य दायनियमाः<br>स्त्री-धन की हकदारी के नियम | ... | ५८७ | १०१ |
| | मिताक्षरीयाः स्त्री-धनस्य दायनियमाः<br>मिताक्षरा में के स्त्री-धन की हकदारी के नियम | ... | ६०० | १०३ |
| | वाराणसेयाः स्त्री-धनस्य दायनियमाः<br>बनारस के स्त्री-धन की हकदारी के नियम | ... | ६२४ | १०६ |
| | महाराष्ट्रीयाः स्त्री-धनस्य दायनियमाः<br>बंबई के स्त्री-धन के हकदारी के नियम | ... | ६२५ | १०६ |
| | मयूखीयाः स्त्री-धनस्य दायनियमाः<br>व्यवहारमयूख में के स्त्री-धन की हकदारी के नियम | ... | ६२७ | १०६ |
| | द्राविडाः स्त्री-धनस्य दायनियमाः<br>मद्रास के स्त्री-धन की हकदारी के नियम | ... | ६६४ | १११ |
| | मैथिलाः स्त्री-धनस्य दायनियमाः<br>मिथिला के स्त्री-धन की हकदारी के नियम | ... | ६६४ | ११५ |
| | दायभागीयाः स्त्री-धनस्य दायनियमाः<br>दायभाग (बंगाल) के स्त्री धन की हकदारी के नियम | ... | ७०७ | ११६ |
| | सार्वत्रिकाः स्त्री-धनस्य दायनियमाः<br>सब जगह माने जाने वाले स्त्री-धन की हकदारी के नियम | ... | ७३६ | १२० |
| ११ | स्त्रियाः दायप्राप्तं धनम् ...<br>स्त्री का हकदारी में मिला धन | ... | ७६० | १२३ |
| | दायप्राप्ते धने स्त्रिया दायादाः<br>हकदारी में मिले धन में स्त्री के हकदार | | ७६६ | १२५ |
| | स्त्री-दायादानां दायप्राप्तेऽर्थेऽधिकारः<br>स्त्री हकदारों के दाय में मिले धन में अधिकार | ... | ७८७ | १२८ |
| | (प्रत्यादाः) ... ...<br>धन को वापस लेनेवाले | ... | ८०० | १३० |
| | (विधवा-प्राप्तो दायः) ...<br>विधवा को मिला दाय-धन | ... | ८०३ | १३० |
| | (आय-संचयः) ... ...<br>इकट्ठी हुई आमदनी | ... | ८२४ | १३३ |

| विषय-संख्या | विषयनामानि | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|

[ विधवायाः ( परिमिताऽधिकारिण्या अपरस्या वा स्त्रिया ) दायप्राप्तेऽर्थेव्ययाधिकारः ] ... ८७० १३९
विधवा का ( या दूसरी अपूर्ण अधिकारवाली स्त्री का ) दाय ( हक़दारी ) में पाये धन में खर्च करने का अधिकार
( विधवायाः कुटुम्बिभिर्मिथस्त्यागेन समयविधाने सामर्थ्यम् )... ... ... १०५२ १६२
विधवा का कुटुम्बियों के साथ समझौता करने में अधिकार
( भिन्नप्रकारेषु ऋणेषु विधवायाः सामर्थ्यम् ) १०८३ १६६
भिन्न-भिन्न प्रकार के कर्ज में विधवा का अधिकार
( संपत्तेस्त्यागः ) ... ... ११०९ १६९
धन का त्याग
( विधवाया दायप्राप्त-धनप्रबन्धेऽधिकारः )... ११४७ १७३
विधवा का दाय में मिले धन में अधिकार
[ विधवां (अपरां वा मितस्वाम्यां) स्त्रियं प्रतिदत्तं राजशासनम् ] ... ... ११६० १७५
विधवा ( या दूसरी अपूर्ण अधिकारवाली स्त्री ) के प्रति दी अदालत की आज्ञा
( विधवां प्रति प्रत्यादकृतोऽभियोगः ) ... ११६९ १७६
विधवा के विरुद्ध प्रत्याद ( धन के वापस लेनेवाले ) द्वारा चलाया मुकद्दमा
विधवाभिः परिमितस्वाम्याभिरपराभिर्वा स्त्रीभिरनधिकारं कृतानां कर्मणां प्रतीकाराः ११७७ १७७
विधवाओं या दूसरी अपूर्ण अधिकार वाली स्त्रियों द्वारा अधिकार के बिना किये कामों का इलाज
(प्रत्यादास्तेषामधिकाराश्च) ... ... ११७७ १७७
धन के वापस लेनेवाले और उनके अधिकार
( प्रत्यादस्याऽधिकारित्वघोषणाय विधवाया अनधिकारित्वादेशाय वाऽभियोगः ) ... ११८३ १७८
धन के वापस लेनेवाले के अधिकारी होने की घोषणा और विधवा के अनधिकारिणी होने की आज्ञा के लिए मुकद्दमा

## आर्यविधानम्।


| विषय-संख्या | विषयनामानि | श्लोक-संख्या | पृष्ठ-संख्या |
| --- | --- | --- | --- |
| | (प्रत्याद्-संपत्तिकस्त्रोरभियोगः) ... | १२२६ | १८४ |
| | धन के वापस लेनेवाले और उन के खरीदनेवाले का मुकदमा | | |
| | (विधवाया मर्यादोत्तरं स्वाम्यजनितोऽधिकारः) | १२३४ | १८५ |
| | विधवा का अवधि से अधिक काल तक अधिकार रखने से उत्पन्न हुआ अधिकार | | |
| १२ | मितक्षरामते संसृष्टिनः संसृष्टधनं च | [illegible] | १८७ |
| | मिताक्षरा के मत में साझेदार और साझे का धन ... | | |
| | संसृष्टा जनाः | १२५३ | १८७ |
| | साझेदार लोग | | |
| | संसृष्टि-धनम् | १२७६ | १९० |
| | साझे का धन ... ... | | |
| | व्यक्तधनम् ... ... | [illegible] | २०१ |
| | व्यक्ति का (निजी) धन | | |
| | पैतृकं धनम् | १३५१ | २०१ |
| | पिता का धन | | |
| | (संसृष्ट-कुटुम्बे विधानगतं पुत्त्यनुमानम्) | [illegible] | २०२ |
| | साझे के कुटुम्ब में विधान (कानून) द्वारा साझेदारी का अनुमान | | |
| | (संसृष्टकुटुम्बव्यापारः) | [illegible] | २०३ |
| | साझे के कुटुम्ब का व्यापार | | |
| | संसृष्टार्थस्य प्रबन्धः संसृष्टिनामधिकारविवेचनं च | [illegible] | २०७ |
| | साझे के धन का प्रबन्ध और साझेदारों के अधिकार का विचार | | |
| | प्रबन्धकस्तदधिकाराश्च | [illegible] | २१० |
| | प्रबन्ध करनेवाला और उसके अधिकार | | |
| | (अभियुक्तियोग्या जनाः) | [illegible] | २२४ |
| | मुकद्दमा चलाने लायक आदमी | | |
| | (प्रबन्धकं प्रति दत्तं राजशासनम्) | | २२८ |
| | प्रबन्ध करने वाले को दी गई न्यायालय की आज्ञा | | |

विषयनामानि

| विषय-संख्या | विषयनामानि | | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|---|
| | संसृष्टसंपदो व्ययः<br>साझे के धन का खर्च करना | ... | १५५५ | २२६ |
| | ( संसृष्टस्य संसृष्टाऽर्थे स्वभागत्यागः )<br>साझेदार का साझे के धन में अपना हिस्सा छोड़ना | ... | १६१५ | २३७ |
| | ऋणप्रत्यादानाक्षमत्वम्<br>कर्ज चुकाने में असमर्थता | ... | १६१७ | २३७ |
| | संसृष्टार्थव्ययप्रतीकारः<br>साझे के धन के खर्च की रोक | ... | १६२६ | २३८ |
| | दायभागीयाः संसृष्टास्तत्रोक्तः संसृष्टार्थश्च<br>दायभाग में कहे साझेदार और उसमें कहा साझे | ... | १६८२ | २४६ |
| १४ | मिताक्षरीयमृणविवेचनम्<br>मिताक्षरा में का कर्ज का विवेचन | ... | १७२५ | २५२ |
| | व्यक्तिगतार्थ ऋणभारिता<br>व्यक्तिगत धन पर कर्ज का बोझ | ... | | |
| | संसृष्टानां स्वार्थे ऋणभारिता<br>के स्वार्थ पर कर्ज का बोझा | ... | १७३० | २५३ |
| | पैतृकऋणार्थं संसृष्टार्थे ऋणभारिता<br>पिता के कर्ज के लिए साझे के धन पर कर्ज का बोझा | ... | १७३८ | २५४ |
| १५ | दायभागीयमृणविवेचनम्<br>दायभाग में का कर्ज का विचार | ... | १८०६ | २७७ |
| १६ | मिताक्षरोक्तो विभागः<br>मिताक्षरा में कहा बटवारा | ... | १८१६ | २७८ |
| | ( विभाज्यं धनम् )<br>बांटने लायक धन | ... | | |
| | ( संपत्तेरायव्ययपरीक्षणम् )<br>संपत्ति की आमदनी और खर्च की जांच | ... | १८३१ | २८२ |
| | विभागे दायार्हा जनाः<br>बटवारे में हिस्सा पाने योग्य पुरुष | ... | १८४५ | २८२ |
| | विभागे प्रतिबन्धाः<br>बटवारे में रुकावटें | ... | २०२८ | २९५ |

| विषय-संख्या | विषयनामानि | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|
| | अंशानां विवेचनम् ... ... <br> हिस्सों का विचार | २०३५ | २९६ |
| | विभागविधानविधिः ... ... <br> बटवारे का नियम | २०४६ | २९८ |
| | अभियोगे प्रसज्यमाने संसृष्टेषु जनिर्मरणं च <br> मुकद्दमे के चलते हुए साझेदारों में जन्म और मरण का होना | २११८ | ३०८ |
| | वण्टनकृतेऽभियोगः ... ... <br> बटवारे के लिए मुकद्दमा | २१२६ | ३०९ |
| | प्रकीर्णका नियमाः ... ... <br> दूसरे साधारण नियम | २१४६ | ३१२ |
| | पुनर्विभजनम् ... ... ... <br> फिर से बांटना | २१५२ | ३१३ |
| | विभागस्य प्रभावः ... ... <br> बटवारे का असर | २१६५ | ३१५ |
| | पुनः संयोगः ... ... ... <br> फिर से संयोग | २१७३ | ३१६ |
| | तथाप्रोक्तेच्छापत्रकृतो विभागः ... <br> तथा कथित इच्छापत्रद्वारा किया बटवारा | २१९० | ३१८ |
| | विभाग इच्छापत्र प्रभावः ... ... <br> बटवारे में इच्छापत्र का प्रभाव | २१९० | ३१८ |
| १७ | दायभागीयो विभागः ... ... <br> दायभाग में कहा बटवारा | २१९६ | ३१९ |
| क | परिशिष्टम् ... ... ... <br> विशेश सूचना | | |
| | प्रस्तावितान्यार्यविधानसंशोधनानि <br> प्रस्तावरूप से पेश किये हिन्दू-कानून के संशोधन | | १ क |
| | शुद्धिपत्रम् ... ... ... | — | (च) |

ॐ

# आर्यविधानम् ।

( विश्वेश्वरस्मृतेरुत्तरार्धरूपम् । )

विश्वेश्वरस्मृतेरेवोत्तरार्धस्य स्वरूपतः ।
भारतीयार्यजातीयो व्यवहारो विविच्यते ॥ १ ॥

विश्वेश्वरस्मृति के ही उत्तरार्ध के रूप में भारतीय आर्य जाति ( हिन्दुओं ) के कानून की विवेचना की जाती है ।

## त्रयोदशो ( व्यवहारा )ऽधिकारः ।

### १ उपोद्घातः ।

परिचय ।

चातुर्वर्ण्ये समुत्पन्नास्तन्मताऽनुगताश्च ये ।
प्रत्यावृत्ताश्च ये तस्मिंस्तदर्थं विधिरुच्यते ॥ २ ॥

जो चार वर्णों में उत्पन्न हुए और उनके मत ( धर्म ) को मानने वाले हैं और जो ( अन्य धर्म ग्रहण करने के बाद ) फिर उस धर्म में लौट आये हैं उनके लिए नियम ( कायदे ) कहे जाते हैं ।

### २ व्यवहारोद्भवस्थानानि ।

कानून की उत्पत्ति के स्थान ।

यथोक्तं मनुस्मृतौ ।
मनुस्मृति में भी जैसा कहा है ।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥
( अ० २, श्लो० १२ )

वेद, स्मृति, श्रेष्ठ पुरुषों का आचार और अपनी आत्मा को सन्तोष देने वाली बात—यह चार तरह के साक्षात् धर्म के लक्षण हैं ।

याज्ञवल्क्यस्मृतावपि ।
याज्ञवल्क्यस्मृति में भी कहा है ।

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
( आचाराध्याय, श्लो० ७ )

वेद, स्मृति, सत्पुरुषों का आचार, अपनी आत्मा को प्यारी लगने वाली बात और शुद्ध संकल्प से उत्पन्न हुई इच्छा—यह धर्म का मूल माना गया है ।

( इनमें शास्त्र की आज्ञा में दो मत होने पर अपने प्रिय मत को ग्रहण करना ही 'स्वस्य च प्रियमात्मनः' का और शास्त्राज्ञाओं में से किसी विशेष आज्ञा को पालन करते रहने का विचार करना ही 'सम्यक् संकल्पजः कामः' का तात्पर्य है ।)

**तत्रैव च ।**

वहीं यह भी लिखा है ।

**यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ।**
**तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥**
**( आचाराध्याय, श्लोक ३४३ )**

जिस देश में जो रीति, रिवाज या कुल की स्थिति हो जब वह ( देश ) अपने अधिकार में आ जाय, तब ( राजा को ) उसी प्रकार से उसका पालन करना चाहिए । ( प्रचलित रिवाजों में उलट-फेर नहीं करना चाहिए । )

**पाराशरे माधवीये तु ।**

पाराशरमाधवीय में तो ।

**पाराशरे माधवीये देवलस्योक्तिरुद्धृता ।**
**यत्काप्यावश्यकत्वेन स्मृतिशास्त्रावराधिनी ॥**
**प्रथा प्रचलिता या स्यात् सा तत्रैवोपयुज्यते**
**नाऽन्यत्र तु ग्रहीतव्या सा प्रथा विबुधैः पुनः ॥**
**( युग्मेन तद्भावो वर्णितः )**

पाराशरमाधवीय में देवल का वचन उद्धृत किया है कि कहीं आवश्यकता के कारण स्मृतिशास्त्र का विरोध करनेवाली जो प्रथा पड़ गई हो, वह वहीं काम में ली जाती है । परन्तु विद्वानों को उस प्रथा को दूसरे स्थान पर ग्रहण नहीं करना चाहिएं ।

**पुनश्च तत्रैव ।**

फिर वहीं पर लिखा है ।

**प्रान्ते पुरेऽथवा ग्रामे कापि वा विज्ञमण्डले ।**
**रूढामप्यागमभ्रष्टां रीतिं नैव विरोधयेत् ॥**

किसी प्रान्त, नगर या गांव में अथवा समझदार पुरुषों में प्रचलित हुई शास्त्र-विरुद्ध रीति का भी विरोध न करे ।

**अधुना तु ।**

आज कल तो ।

**श्रुतिस्मृतिसदाचारा विधानानां प्रवर्तकाः ।**
**देशभेदैः पुनस्तत्र जायते भिन्नता क्वचित् ॥ ३ ॥**

स्मृति और श्रेष्ठ पुरुषों के आचार ( रिवाज ) नियमों ( कायदों ) के

चलाने वाले होते हैं । फिर उनमें देश के भेद से कहीं-कहीं भिन्नता हो जाती है ।

**वाराणस्यां महाराष्ट्रे विदेहे द्रविडे तथा ।**
**मान्या मिताक्षरा नित्यं प्रान्तिकाऽऽचारमिश्रिता ॥ ४ ॥**

बनारस, महाराष्ट्र, मिथिला और मद्रास में ( उक्त ) प्रान्त के रिवाज से युक्त मिताक्षरा सदा मान्य है ।

( याज्ञवल्क्य स्मृति पर विज्ञानेश्वर द्वारा लिखी गई टीका का नाम मिताक्षरा है । यह विक्रम की बारहवीं शताब्दी के पूर्वार्ध के अन्तिम भाग के निकट लिखी गई थी । याज्ञवल्क्यस्मृति का रचना-काल चौथी शताब्दी के करीब माना जाता है । विज्ञानेश्वर दक्षिण के चालुक्य नरेश का प्रधान मंत्री था । )

**वाराणस्यां तु मान्यौ स्तो द्वावेतौ हि तया समम् ।**
**वीरमित्रोदयस्त्वाद्योऽपरो निर्णयसिन्धुकः ॥ ५ ॥**

बनारस में उस ( मिताक्षरा ) के साथ ये दो ( भी ) माने जाते हैं—पहला 'वीरमित्रोदय' और दूसरा 'निर्णयसिन्धु' । ( वीरमित्रोदय सोलहवीं शताब्दी में लिखा गया था । )

**महाराष्ट्रेऽपि पूर्वोक्तावुभौ मान्यौ तया सह ।**
**व्यवहारमयूखश्च मुख्यो यो गुर्जरे ध्रुवम् ॥ ६ ॥**

महाराष्ट्र ( बम्बई प्रान्त ) में भी उस ( मिताक्षरा ) के साथ पहले कहे दोनों ( वीरमित्रोदय और निर्णयसिन्धु ) माने जाते हैं, और व्यवहारमयूख ( भी ) मान्य समझा जाता है, जो निश्चय ही गुजरात में मुख्य है ।

( यह व्यवहारमयूख नीलकण्ठ भट्ट ने सत्रहवीं शताब्दी में लिखा था । )

**विदेहे तु तया सार्धं मान्यौ स्तो 'वि'-समन्वितौ ।**
**वादचिन्तामणिः पूर्वो वादरत्नाकरोऽपरः ॥ ७ ॥**

मिथिला में उस ( मिताक्षरा ) के साथ पहला 'वि' से युक्त वादचिन्तामणि ( विवादचिन्तामणि ) और दूसरा वादरत्नाकर ( विवादरत्नाकर ) मान्य है ।

**द्रविडेऽथ तया सार्धं मान्या ग्रन्था इमे बुधैः ।**
**सरस्वतीविलासोऽथ वीरमित्रोदयस्तथा ॥ ८ ॥**
**पाराशरो माधवीयस्तथा च स्मृतिचन्द्रिका ।**
**एषा न्यायविधौ ज्ञेया प्रान्तीया शास्त्रमान्यता ॥ ९ ॥**

दक्षिणी-भारत में विद्वानों द्वारा उस ( मिताक्षरा ) के साथ ये ग्रन्थ मान्य समझे जाते हैं—सरस्वतीविलास, वीरमित्रोदय, पाराशरमाधवीय और स्मृतिचन्द्रिका । न्याय के विषय में यह प्रान्तों में की शास्त्रों की मान्यता जाननी चाहिए ।

**वङ्गे पुनर्दायभागः सर्वैरादियते बुधैः ।**
**अतो विधीनां मुख्ये द्वे व्यवस्थे भारते मते ॥ १० ॥**

फिर बंगाल में (जीमूतवाहन-रचित) 'दायभाग' सब विद्वानों द्वारा आदर पाता ( माना जाता ) है । इसलिये भारतवर्ष में विधियों ( नियमों ) के दो मुख्य तरीके माने गये हैं ।

( जीमूतवाहन का समय तेरहवीं और पंद्रहवीं शताब्दी के बीच अनुमान किया जाता है । )

**दायप्राप्त्यै तथा पृक्तकुटुम्बार्थं विनिश्चिताः ।**
**मिताक्षरीया नियमा दायभागेऽन्यथा कृताः ॥ ११ ॥**

दाय-धन की प्राप्ति के लिये और साझेवाले कुटुम्ब के लिये निश्चित किये मिताक्षरा के नियम दायभाग में बदल दिये गये हैं ।

**दत्तक्ये तस्य मीमांसा चन्द्रिका च मता बुधैः ।**
**वाराणस्यां विदेहे च मुख्या पूर्वैव मन्यते ॥ १२ ॥**
**बंगेष्वथाऽपरा नाम्ना ख्याता दत्तकचन्द्रिका ।**
**सारमेतद् हि विज्ञेयं दत्तकस्य विनिर्णये ॥ १३ ॥**

गोद लेने के विषय में विद्वानों ने उस ( दत्तक ) की मीमांसा और चन्द्रिका ( अर्थात्-दत्तकमीमांसा और दत्तकचन्द्रिका ) को माना है । बनारस और मिथिला में पहली मुख्य मानी जाती है और बंगाल में दूसरी दत्तकचन्द्रिका नाम वाली प्रसिद्ध है । गोद के निश्चय करने में यही सार जानना चाहिए ।

**मिताक्षरानुगाश्चैते चतुर्धा ये विभाजिताः ।**
**दत्तादानेऽथ दायाप्तौ तेऽपि भिन्नमताः पुनः ॥ १४ ॥**

और फिर जो ये मिताक्षरा को मानने वाले चार विभागों ( बनारस आदि स्थानों ) में बाँटे गये हैं, वे भी गोद लेने में और हकदारी से मिलनेवाले धन के लेने में अलग अलग मतवाले हैं ।

**अथवा**

**मिताक्षरा मता मुख्या महाराष्ट्रे तथोत्तरे ।**
**कनारा नाम्नि देशेऽथ प्रान्ते रत्नगिरेः पुनः ॥ १५ ॥**

महाराष्ट्र में, उत्तर कनारा नामक देश में और रत्नगिरि प्रान्त में मिताक्षरा मुख्य मानी गई है ।

**गुर्जरे बम्बईद्वीपे उत्तरे कोङ्कणेऽपि च ।**
**व्यवहारमयूखस्तु मतो मुख्यो बुधैर्ध्रुवम् ॥ १६ ॥**

गुजरात में, बम्बई द्वीप ( island ) में और उत्तर कोंकण में भी विद्वानों ने व्यवहारमयूख को निश्चय ही मुख्य माना है ।

**पूनापुरे खानदेशे नगरे चाह्मदे पुनः ।**
**मिताक्षरामयूखौ तु समौ मान्यौ मतौ बुधैः ॥ १७ ॥**

फिर पूना में, खानदेश में और अहमदनगर में विद्वानों ने मिताक्षरा और व्यवहारमयूख को समान रूप से मान्य माना है।

**आचारस्त्रिविधो ज्ञेयः स्थानजातिकुलागतः।**
**चिरप्रचलितस्याऽस्य स्मृतिभ्यो मुख्यता मता ॥ १८ ॥**

आचार ( रिवाज ) तीन तरह का जानना चाहिये–देश से आया, जाति से आया और कुल ( खानदान ) से आया। बहुत समय से चले आनेवाले इस ( रिवाज ) की स्मृतियों से भी मुख्यता ( श्रेष्ठता ) मानी गई है।

**देशाचारस्य मुख्यत्वाद्यस्मिन्देशे स्थितो जनः।**
**तत्रत्या नियमा एव दायाद्ये तत्कृते मताः ॥ १९ ॥**

देश के रिवाज के मुख्य होने से जिस देश में पुरुष रहता हो वहां के नियम ही उसके लिये दायका धन पाने में माने गये हैं।

**देशान्तरं गते तस्मिन्नपि नो तत्र भिन्नता।**
**तावद्यावन्न तद्देशाचारास्तेनानुमोदिताः ॥ २० ॥**

उस ( पुरुष ) के दूसरे देश मे चले जाने पर भी उसनें तब तक भिन्नता नहीं होती, जब तक उसने उस ( नवीन देश ) के रिवाजों का अनुमोदन न कर लिया हो ( उन्हें स्वीकार न कर लिया हो )।

**तद्देशीयेषु नियमेष्वप्यासन्ये तु सम्मताः।**
**तस्मिंस्तत्र स्थिते मान्यास्त एवास्य कृते पुनः ॥ २१ ॥**
**ये तु देशान्तरं याते तस्मिन्संयोजिताः परम्।**
**आचारा नियमेष्वन्ये ते प्रयोज्या न तत्कृते ॥ २२ ॥**

फिर उस देश के नियमों में भी जो ( नियम ) उसके वहां रहने के समय मान्य थे, वे ही उसके लिये मानने चाहिए। परन्तु जो रिवाज उसके दूसरे देश में जाने पर नियमों ( कानून ) में जोड़े गये हों, वे उसके लिये काम में नहीं लेने चाहिए।

**आचारे त्वत्र जातीये स्थानीये वाप्यपेक्ष्यते।**
**प्राचीन्यं निश्चितत्वं च सातत्यं न्याय्यता तथा ॥ २३ ॥**

यहां पर जाति के या स्थान के रिवाज में भी प्राचीनता, निश्चितता ( certainty ), निरन्तरता ( continuity ) और न्याय्यता ( reasonableness ) की आवश्यकता होती है।

**विशिष्टेन विधानेनावर्जितः सुप्रमाणितः।**
**सदाचाराविरुद्धश्च व्यवहारो बुधैर्मतः ॥ २४ ॥**

विशेष ( खास ) कानून से नहीं निषिद्ध किया हुआ, अच्छी तरह से सिद्ध

किया हुआ और सदाचार (morality) से अविरुद्ध रिवाज विद्वानों ने मान्य माना है।

यत्र साधारणन्यायनियमैरस्य भिन्नता ।
वैशद्येन तु तत्रासौ व्याख्येयः स्पष्टताकृते ॥ २५ ॥

जहां पर कानून के साधारण नियमों से इस ( रिवाज ) की भिन्नता हो, वहां पर स्पष्टता के लिए इसकी विशद रूपसे व्याख्या कर देनी चाहिए।

आचारोऽल्पप्रमाणोऽपि नव्यत्वादिह मन्यते ।
परं तत्पुष्टयेऽन्यत्र लभ्यान्यपि सुनिश्चितम् ॥ २६ ॥
आदेयानि प्रमाणानि यतः सम्यक्प्रमाणितः ।
आचार एव विज्ञेयः स्वतः सिद्धो बुधैरिह ॥ २७ ॥

नया होने से यहां पर थोड़े प्रमाणवाला रिवाज भी मान लिया जाता है। परन्तु उसकी पुष्टि ( मज़बूती ) के लिए दूसरी जगह (other parties) से मिलनेवाले प्रमाण भी निश्चय ही ग्रहण करने चाहिए; क्योंकि अच्छी तरह से सिद्ध किया हुआ आचार ही, यहां पर, विद्वानों को अपने आप प्रमाणित हुआ जानना चाहिए।

वंशाचारस्तु मान्यः स्यात्स्थानीयाचारवद् ध्रुवम् ।
परम्परागतश्चाथ निश्चितश्च स्थिरः पुनः ॥ २८ ॥

स्थान ( देश ) के रिवाज के समान ही वंश का रिवाज भी, निश्चय ही, परंपरा से चला आनेवाला (continuous) निश्चित (certain) और स्थिर (invariable) मान्य होता है।

आकस्मिकोऽथ वंशेच्छाकृतस्त्यागः सुसाधितः ।
वंशाचारस्य तल्लोपकृतेऽलं विबुधैर्मतः ॥ २९ ॥

विद्वानों ने पूरी तौर से सिद्ध किया गया अकस्मात् (accidental) या कुटुम्ब की इच्छा से किया वंश के रिवाज का त्याग उसके लोप ( छोड़ने ) के लिए पर्याप्त माना है।

स्थानीयव्यवहारस्य स्थितिर्भिन्ना पुनर्मता ।
यतः स तु भवेन्मान्यः सर्वैस्तत्र स्थितैर्जनैः ॥ ३० ॥

स्थान के रिवाज की स्थिति भिन्न मानी गई है; क्योंकि वह तो वहां पर रहनेवाले सब लोगों द्वारा मान्य होता है।

हिन्दुन्यायानुगे वंशे जातः कोपि प्रदर्शयेत् ।
तद्विरुद्धं निजाचारं साधयेत्तं स एव हि ॥ ३१ ॥

हिन्दुओं के कानून को मानने वाले वंश में पैदा हुआ कोई भी ( पुरुष ) उसके विरुद्ध अपना रिवाज बतलावे, तो वही उसको प्रमाणित करे।

अनार्येणात्र वर्गेण कुटुम्बेनाथवा पुनः ।
कतिचिद्रीतयो नूनं स्वीकृता आर्यसंमताः ॥ ३२ ॥
तयोः कोऽपि विशिष्टाया आर्यरीतेर्ग्रहो यदि ।
स्ववर्गे दर्शयेत्तर्हि स एवैनं प्रमाणयेत् ॥ ३३ ॥

फिर हिन्दुओं से भिन्न जाति ने या कुटुम्बने हिन्दुओं की मानी हुई कुछ रीतियां निश्चय ही, स्वीकार करली हों और उन ( जाति या कुटुम्बवालों ) में से यदि कोई ( पुरुष ) हिन्दुओं के ( किसी ) खास रिवाज का अपने वर्ग में ग्रहण करना बतलावे, तो वही उसको प्रमाणित करे ।

आचाराः स्वीकृता यत्र त्वन्यैर्हिन्दुषु संमताः ।
तत्राचारं विशिष्टं यो वदेत्तं साधयेदसौ ॥ ३४ ॥

जहां पर हिन्दुओं में माने हुए रिवाज दूसरों ने स्वीकार कर लिए हों, वहां पर जो कोई ( किसी ) खास रिवाज का ( होना ) कहे वही उसे सिद्ध करे ।

सदाचारविरुद्धो यो लोकाचारविवर्जितः ।
विधानेन निषिद्धश्च ह्याचारस्त्याज्य एव सः ॥ ३५ ॥

जो सदाचार (morality) से विरुद्ध, लोकाचार (public policy) से वर्जित और कानून (enactment of legislation) से निषिद्ध हो, वह रिवाज छोड़ देने लायक ही होता है ।

## ३ दायप्राप्तौ सामान्या नियमाः ।

दाय-धन की प्राप्ति में साधारण नियम ।

मनूक्तमुद्धृत्य प्रकृतमनुसरिष्यते ।
मनु की उक्ति उद्धृत करके प्रस्तुत विषय का अनुसरण किया जायगा ।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥
( अ० ६, श्लो० १८७ )

सपिण्डों में जो-जो निकटतम होता है उस-उस का धन होता है । इसके बाद सकुल्य, आचार्य या शिष्य ( क्रम से ) अधिकारी होते हैं ।

मिताक्षरायां सामीप्यं दाये मुख्यं मतं बुधैः ।
पारत्रिकस्य लाभस्य दायभागेऽस्ति मुख्यता ॥ ३६ ॥

विद्वानों ने मिताक्षरा में दाय-प्राप्ति में समीपता ( निकटतम रक्त-संबन्ध ) को मुख्य माना है और दाय-भाग में पारलौकिक लाभ ( पिण्ड आदि देने के अधिकार ) की मुख्यता है ।

आर्येषु प्राक्तनी नूनं पृक्तकौटुम्बिकी प्रथा ।
पृक्ताः संपृक्तिभाजश्च पूजने भोजने धने ॥ ३७ ॥

हिन्दुओं में निश्चय ही साझेवाले कुटुम्ब का रिवाज पुराना है, और साझेवाले पूजन में, भोजन में और संपत्ति में साझा रखते हैं ।

नूनं मैताक्षरेष्वत्र संपृक्तेषु कुटुम्बिषु ।
संपृक्तेऽर्थे भवेत्स्वार्थः संपृक्तो न विभाजितः ॥ ३८ ॥

निश्चय ही यहां पर मिताक्षरा को मानने वाले साझे के कुटुम्बों मे साझे के धन में साझेवाला स्वार्थ (interest) होता है, बटा हुआ नहीं होता ।

दायभागानुगेष्वत्र संश्लिष्टकुलशालिषु ।
संश्लिष्टेऽर्थे भवेदंशो विभाजितसमः पुनः ॥ ३९ ॥

फिर दायभाग को माननेवाले साझे के कुटुम्बवालों में साझे के धन मे हिस्सा जुदा के समान (quasi--severalty) होता है ।

मिताक्षरामते याति संसृष्टेषु कुटुम्बिषु ।
कस्याऽपि मृत्यौ तद्भागः संसृष्टाञ्शेषजीविनः ॥ ४० ॥

मिताक्षरा के मत में साझे के कुटुम्बियों में किसी के मरने पर उसका हिस्सा ( बाकी के ) जीवित साझेदारों को मिल जाता है ।

मैताक्षरेषु किन्त्वद्य संसृष्टेषु कुटुम्बिषु ।
कस्यापि मृत्यौ तद्भागो याति तद्विधवां प्रति ॥ ४१ ॥

किन्तु आजकल मिताक्षरा के अनुसार चलने वाले साझे के कुटुम्बियों में [ ई० सं० १९३७ के १८ वें ऐक्ट ( कानून से ) ] किसी के मरने पर उसका हिस्सा उसकी विधवा स्त्री को मिल जाता है ।

दायभागे तु संसृष्टाऽसंसृष्टेषूभयेष्वपि ।
कस्याऽपि मृत्यौ तद्दायो याति तस्योत्तरान् निजान् ॥४२॥

'दायभाग' में तो साझेवाले और बे साझेवाले दोनों में से ही किसी के मरने पर उसका धन उसके अपने आगे वाले को मिलता है ।

आत्मनो विधवा भार्या पुत्री माता पितामही ।
प्रपितामह्यपि पुनः पुंदायार्हाः प्रकीर्तिताः ॥ ४३ ॥

अपनी विधवा स्त्री, लड़की, मा, दादी और परदादी ये पुरुषों का दाय ( धन ) पानेवाली कही गई हैं ।

वाराणस्यां तथा वङ्गे मिथिलायां सुनिश्चितम् ।
पञ्चाङ्कैकवर्षात्तदायास्तिनियमेन हि ॥ ४४ ॥
आर्येषु विहिता पौत्री दौहित्री च भगिन्यपि ।

**दायाऽनर्हा सपिण्डेषु दायार्हा त्वधुना बुधैः ॥ ४५ ॥**

बनारस में, बंगाल में और मिथिला में निश्चय ही ( विक्रम संवत् १९८६ ) ( ई० सं० १९२९ ) के वर्ष में स्वीकार किये दायप्राप्ति के कानून (Hindu law of inheritance) से हिन्दुओं में पोती, नवासी बहन सपिण्डों में दाय पाने के योग्य न होने पर भी इस समय धन पाने लायक बनादी गई है ।

**नूनमत्र महाराष्ट्रे द्रविडे चाऽपराः स्त्रियः ।**
**बह्व्यो भवन्ति दायार्हा देशाचारादिभिः पुनः ॥ ४६ ॥**

फिर, निश्चय ही यहां पर देश के रिवाजों आदि से महाराष्ट्र ( अर्थात् बंबई प्रान्त ) और मद्रास में और ( भी ) ( दूसरी ) बहुत सी स्त्रियां ( पुरुषों के ) धन की हकदार होती हैं ।

**चतुर्नवाङ्कचन्द्राब्दस्वीकृतव्यवहारतः ।**
**स्नुषाऽधवाथ च स्वीयमृतपुत्रस्नुषाऽधवा ॥ ४७ ॥**
**क्रमाद् वैयक्तिकेऽर्थेऽत्र श्वशुरस्याथ तत्पितुः ।**
**स्यातां सर्वत्र दायार्हे इति हिन्दुषु निश्चितम् ॥ ४८ ॥**

( विक्रम ) संवत् १९९४ ( ई० सं० १९३७ ) में स्वीकार किये कानून (Act xviii of 1937 A. D.) से विधवा पुत्र-वधू और अपने मृत पुत्र की विधवा पुत्र-वधू क्रम से ससुर के और उस ( ससुर ) के पिता के अपने (seperate) धन में, सब जगहों पर, दाय पाने योग्य होती है—ऐसा हिन्दुओं में निश्चित किया गया है ।

**स्त्रीपुंसयोरुत्तरः स्याद् नरः पूर्णाऽधिकारवान् ।**
**सर्वत्रर्ते महाराष्ट्रं मिताधिकृतिकाः स्त्रियः ॥ ४९ ॥**

स्त्री और पुरुष का उत्तराधिकारी पुरुष पूरे अधिकार वाला होता है । स्त्रियां महाराष्ट्र ( बंबई प्रान्त ) के सिवा सब जगह नियमित ( जीवन पर्यन्त ) अधिकार वाली होती हैं ।

**स्वमृत्युकाले संपत्तेः पूर्णस्वामी तु यो नरः ।**
**स तदन्त्याऽधिकारी स्यात्प्रभवश्चार्थभागिनाम् ॥ ५० ॥**
**स्त्रीणां मिताऽधिकारित्वात्तद् द्वयं नोपपद्यते ।**
**स्त्रीधनेऽथ महाराष्ट्रे क्वचित्तत्संभवो मतः ॥ ५१ ॥**

जो पुरुष अपनी मृत्यु के समय संपत्ति ( धन ) का पूर्ण अधिकारी हो, वह उस ( धन ) का अन्तिम अधिकारी होता है और ( अपने उस ) धन को लेने वालों का ( उस धन के लिए ) मूल पुरुष ( उद् गम-स्थान ) माना जाता है । स्त्रियों के परिमित ( जीवन पर्यन्त ही ) अधिकारीणी होने से ये दोनों बातें ( अन्तिम अधि-कारिणी होना और धन का मूल-स्थान होना ) नहीं होतीं । ( उनके लिए अपने )

स्त्री–धन में और महाराष्ट्र ( बंबई–प्रान्त ) में कहीं–कहीं, उन ( दोनों बातों ) का हो सकना माना है।

**मृत्युकालेऽप्यगर्भस्थसन्ततेः पुरुषस्य तु ।**
**सद्यस्तद्दायभागी स्यात्समीपस्थस्तदुत्तरः ॥ ५२ ॥**

मृत्यु के समय भी जिस पुरुष की सन्तान ( भार्या के ) गर्भ में न हो, उसका नज़दीक का हकदार उसी ( मृत्यु ) समय उसके धनका हकदार हो जाता है।

**आसन्ने स्वोत्तरे दायो यातो नैवाऽपनीयते ।**
**आसन्नतरगर्भस्थाऽपत्यजन्मऋते ध्रुवम् ॥ ५३ ॥**

( अपने ) नज़दीकी रिश्तेदार को मिला दाय ( धन ) ( मृत्यु के समय ) गर्भ में रहे उससे भी नज़दीक के बालक ( पुत्र या कन्या ) के जन्म के बिना निश्चय ही लौटाला नहीं जाता ( वापस नहीं लिया जाता )। (अर्थात्–पुरुष के मरते ही उसके धन पर जिस नज़दीकी रिश्तेदार का हक हो जाता है, वह धनी की मृत्यु के समय गर्भ में स्थित उससे भी नज़दीकवाली सन्तान के उत्पन्न होने से ही नष्ट होता है। )

**क्वचित्पुनर्मृतार्थं हि दत्तकग्रहणादपि ।**
**उच्छिद्यतेऽधिकारित्वमुत्तरस्याऽधिकारिणः ॥ ५४ ॥**

फिर कहीं–कहीं मरे हुए ( पुरुष ) के लिए लड़का गोद ले लेने से भी अगले अधिकारी का अधिकार नष्ट हो जाता है।

**मृते पितरि तत्पुत्रा मृतताताश्च पौत्रकाः ।**
**प्रपौत्राश्च पुनस्तस्य मृततातपितामहाः ॥ ५५ ॥**
**सहदायहराः स्वस्य पूर्वजस्य निजे धने ।**
**पितृतत्पितृभागेभ्य एव ते दायभागिनः ॥ ५६ ॥**

बाप के मरने पर उसके पुत्र, मरे हुए बापवाले पोते और मरे हुए बाप और दादावाले उसके परपोते अपने पूर्वज ( उस मृत व्यक्ति ) के व्यक्तिगत धन में साथ–साथ भाग लेते हैं। ये लोग ( अपने–अपने ) बाप और दादा के भागों में से ही हिस्सा पाते हैं।

**पुत्रपौत्रप्रपौत्रेषु प्रातिनिध्यं हि पैतृकम् ।**
**स्थितं परं प्रपौत्रस्य पुत्रो दाये विवर्जितः ॥ ५७ ॥**

बेटे, पोते और परपोते में बाप–दादा का प्रतिनिधित्व ( representativeness) रहता है। परन्तु परपोते का पुत्र हकदारी में वर्जित है।

**दायाप्तिर्दैविकी, नैषा निश्चिताऽतः कृतः पणः ।**
**तदप्राप्त्यैव केनापि नो मान्योऽन्यैर्धनांशिभिः ॥ ५८ ॥**

दाय ( हिस्से के धन ) की प्राप्ति भाग्य के अधीन है, यह निश्चित नहीं है। इसलिए उसके मिले बिना ही किसी का ( उस विषय में ) किया हुआ वादा दूसरे

धन का भाग पाने वाले अधिकारियों द्वारा मान्य नहीं होता । (अर्थात्–किसी का दाय के धन की प्राप्ति के पहले किया उसके विषय का वादा ( वादा करनेवाले के बजाय ) दूसरे के उस धन का हकदार हो जाने पर उस पर असर नहीं डालता । )

**मिताक्षरानुसारेण पुत्राः पौत्राः प्रपौत्रकाः ।**
**मृतस्य स्वार्जितेऽर्थे स्युः संसृष्टत्वेन भागिनः ॥ ५९ ॥**

मिताक्षरा के अनुसार लड़के, पोते और परपोते मरे हुए ( पिता ) के निज के कमाये धन में साझेवाले अधिकारी होते हैं । ( अर्थात्–पूर्वज के मरने पर ये सब साथ–साथ उसके अपने कमाये धन के अधिकारी होते हैं । )

**मातामहार्थे दौहित्राः संसृष्टा एकमातृजाः ।**
**भर्तुर्धने सपत्न्यश्च पितृदायेऽथ कन्यकाः ॥ ६० ॥**
**भागं हरन्ति संयुक्तभावेनैव परस्परम् ।**
**महाराष्ट्रे तु कन्यानां व्यस्तत्वेनाऽधिकारिता ॥ ६१ ॥**

एक मा से पैदा हुए साथ रहनेवाले नवासे नाना के धन में, सपत्नियां ( सौतें ) पति के धन में और लड़कियां बाप के धन में आपस में संयुक्त भाव ( साझे के–रूप ) से ही हिस्सा लेती है । महाराष्ट्र ( बंबई ) प्रान्त में तो लड़कियो का अधिकार जुदा–जुदा होता है । ( अर्थात्–अपने–अपने हिस्से की व्यक्तिगत–रूप से पूर्ण मालिक होती हैं । )

**मिताक्षरानुगाः सर्वे सहदायहरास्तु ये ।**
**अपरे ते हरन्त्यत्र व्यक्तिगस्वाम्यतो धनम् ॥ ६२ ॥**

मिताक्षरा को माननेवाले जो दूसरे सारे एक साथ दाय–धन लेनेवाले हैं, वे यहां पर, व्यक्तिगत स्वाम्य से (tenants in-common) की तरह ) धन लेते हैं ।

**दायभागे स्वविधवां त्यक्त्वा कन्या निजास्तथा ।**
**अन्ये संसृष्टभाजोऽपि व्यक्तिगस्वाम्यभागिनः ॥ ६३ ॥**

( जीतमूतवाहन–रचित ) 'दायभाग' में अपनी विधवा स्त्री और अपनी कन्याओं को छोड़कर दूसरे साझे में अधिकार प्राप्त करनेवाले लोग भी व्यक्तिगत मालिकपन का अधिकार हासिल करते हैं ( अर्थात्-उनके बाद उनके हिस्से के धनका अधिकार बचे हुए साझेवालों को न मिल कर, उनके निज के उत्तराधिकारियों को मिलता है । )

**कस्मिन्नपि मृते पृक्तया दायभागिषु निश्चितम् ।**
**पुत्रपौत्रप्रपौत्राणामभावे पृक्तिगं धनम् ॥ ६४ ॥**
**तस्य यात्यपरान्पृक्तान्संसृष्टेष्ववशिष्टितः ।**
**अपृक्तया च हृतं दायं तस्यान्ते तस्य तूत्तरान् ॥ ६५ ॥**

साझे से दाय का धन लेनेवालों में से किसी के मरने पर, निश्चय ही, साझे में रहा धन बेटों, पोतों और परपोतों के अभाव में, साझेदारों में पीछे बचे रहने से,

उसके दूसरे साझेदारों को मिलता है और विना साझे के लिया दाय-धन उस (-लेनेवाले) के मरने पर उसी (मृतक) के उत्तराधिकारियों को मिलता है।

पुत्रपौत्रप्रपौत्रास्तु पित्र्ये पित्रंशभागिनः।
दौहित्र्यश्चाऽथ दौहित्राः स्त्र्यर्थेऽम्बाद्वारतोंऽशिनः॥ ६६॥

लड़के, पोते और परपोते पिता से संबन्ध रखनेवाले धन में पिता के हिस्से से (भाग) लेते हैं। (अर्थात्-अगले-अपने पिता को मिलने वाले धन को ही आपस मे बाँट लेते हैं।) नवासियां और नवासे स्त्री-धन में अपनी माता के द्वारा भाग लेते है। (अर्थात्-एक कन्या के जितनी औलाद होती है, वह उसके एक भाग को ही आपस में बांट लेती है।)

पितृद्वारांशिनः पौत्रा अपि स्युः स्त्रीधने पुनः।
अन्ये सर्वेऽपि विज्ञेया दायादा निजसंख्यया॥ ६७॥

फिर स्त्री के धन मे (उसके) पोते भी पिता के द्वारा (अर्थात्-पिता के हिस्से मे से) ही धन पानेवाले होते हैं। बाकी के सारों को ही अपनी गिनती के अनुसार धन का भाग लेनेवाला जानना चाहिए।

४ दायभागे मिताक्षरोक्तोऽनुक्रमः।

दायभाग मे मिताक्षरा का कहा क्रम।

मिताक्षरानिगदिता विद्वद्भिश्च परिष्कृता।
प्रथमा दायभागस्य व्यवस्थेह प्रदर्श्यते॥ ६८॥

यहां पर मिताक्षरा में कही और विद्वानों द्वारा ठीक की हुई दायभाग की पहली व्यवस्था बतलाई जाती है।

संसृष्टार्थे तु कस्याऽपि मरणे तद्धनांशकम्।
संसृष्टं याति शेषेषु संसृष्टेषु कुटुम्बिषु॥ ६९॥

साझे के धनवालों में किसी के भी मरने पर उसके साझे के धन का भाग बाकी के साझेवाले कुटुम्बियों में चला जाता है। (अर्थात्-बाकी के साझेवालों को मिल जाता है।)

परं नव्यविधानेन संसृष्टेषु कुटुम्बिषु।
कस्याऽपि मृत्यौ तत्स्वाम्यं याति तद्विधवां प्रति॥ ७०॥

परन्तु नवीन कानून से साझे के धनवालों में से किसी के मरने पर उसका अधिकार उसकी विधवा (पत्नी) को मिलता है। (अर्थात्-उसका स्थान वह ग्रहण करलेती है।)

स्वीया वा स्वार्जिता या तु संपत्तिः सा तदुत्तरान्।
याति तत्र न संसृष्टाऽसंसृष्टेष्वन्तरं मतम्॥ ७१॥

जो धन अपना निजी हो या अपना कमाया हुआ हो वह उस (मरने वाले

पत्नी ) के उत्तराधिकारियों को ( ही ) मिलता है । वहां पर साझेवालों और बे-साझेवालों में कोई भेद नहीं माना है ।

**संसृष्टायास्तु संपत्तेः प्रमीतेऽन्त्येऽधिकारिणि ।**
**साऽपि तस्यैव दायादान् याति शास्त्रोक्तरीतितः ॥ ७२ ॥**

साझे के धन के अन्तिम अधिकारी के मरने पर वह ( साझे का धन ) भी शास्त्र में कही रीति के अनुसार उसीके हकदारों को मिलता है ।

**पृथग्भूय पुनर्लोके संसृष्टानां कुटुम्बिनाम् ।**
**मरणे दायभागस्य विधानं वक्ष्यतेऽग्रतः ॥ ७३ ॥**

( एकवार ) जुदा होकर फिर साझा करनेवाले कुटुम्बियों के मरने पर किये जानेवाले हिस्से की रीति आगे कही जायगी ।

**पञ्चाङ्काङ्कैकवार्षिकस्त्र्यर्थग्रहणसूचिना ।**
**विधानेन कृता एताः सहदायजुषः स्त्रियः ॥ ७४ ॥**
**प्रेतस्य स्त्री तथा पुत्रपौत्राणां विधवाः पुनः ।**
**पुत्रैः पौत्रैः प्रपौत्रैर्वा सहदायजुषोऽधुना ॥ ७५ ॥**

( विक्रम ) संवत् १६६५ ( ई० सं० १६३८ ) के स्त्री के धन-ग्रहण को सूचित करनेवाले कानून (act xviii of 1937 amended by act xi of 1938 A.D.) से ये स्त्रियां आज कल एक साथ भाग पानेवाली करदी गई हैः–

मरनेवाले की स्त्री तथा ( उसके ) पुत्रों और पौत्रों की विधवाएँ ( उसके ) लड़कों, पोतों और परपोतों के साथ (ही) हिस्सा लेती हैं । ( यह ई० सं० १६३८ के ११ वें विधान के अनुसार होता है । )

**दाये क्षेत्रादयो यत्र तत्रोक्तस्य नयस्य हि ।**
**प्रयोगो दुष्करो ज्ञेयस्तद्विधानविरोधतः ॥ ७६ ॥**

जहां दाय–धन में खेत आदि (agricultural lands) हों, वहां इस कहे हुए कानून का प्रयोग, उसके ( संबन्ध के ) कानून के विरोध के कारण, कठिनता से होता है–ऐसा जानना चाहिए ।

**मिताक्षरायां संबन्धसामीप्येनैव निश्चितम् ।**
**'दायाद्यं', दायभागे च पारलौकिकलाभतः ॥ ७७ ॥**
**स्वपित्रोः पूर्वजानां हि, परं मैताक्षरेष्वपि ।**
**सगोत्रेषु सपिण्डेषु प्राक्स्वाम्यस्य विनिर्णये ॥ ७८ ॥**
**पारलौकिकलाभस्याधिक्यं तु निकषो मतः ।**
**पिण्डार्थव्याख्ययैवैषा संजाता मतभिन्नता ॥ ७९ ॥**

'मिताक्षरा' में संबन्ध की समीपता से ही हकदारी निश्चित की है और 'दायभाग' में अपने माता–पिता के पूर्वजों को होनेवाले परलोक संबन्धी लाभ से

( हकदारी का ) निर्णय किया है । परन्तु मिताक्षरा को माननेवालों में भी सगोत्रीय सपिण्डों में पहले अधिकार के ( अर्थात्–पहले किसका अधिकार है–इसके ) निर्णय में परलोक में होनेवाले लाभ की अधिकता को ही कसौटी माना है ।

**भिन्नगोत्रसपिण्डेषु रक्तसान्निध्यतो भवेत् ।**
**दायाद्यं, किन्तु तत्रापि चेन्नो तेन विनिर्णयः ॥ ८० ॥**
**तर्ह्यामुष्मिकलाभस्याधिक्येनैव स संमतः ।**
**एतास्तु रीतयः प्रोक्ता दायार्हस्य विनिश्चये ॥ ८१ ॥**

भिन्न ( दूसरे ) गोत्रवाले सपिण्डों में रक्त की समीपता (propinquity in blood) से हकदारी होती है । परन्तु वहां पर भी उससे निर्णय न हो, तो परलोक में होनेवाले लाभ की अधिकता से ही उसे ( निर्णय को ) माना है । दाय के धन को लेनेवाले का निश्चय करने में ये रीतियां कही है ।

**सपिण्डा द्विविधाः स्वीयगोत्रिणश्चान्यगोत्रजाः ।**
**स्वगोत्रजसपिण्डाः स्वषड्वंश्याः स्त्री च कन्यका ॥ ८२ ॥**
**षट् पूर्वजाः सपत्नीकाः षट्षड्वंश्यैर्निजैर्युताः ।**
**दौहित्राश्चेति पञ्चाशत् सप्त चात्र मता ध्रुवम् ॥ ८३ ॥**

सपिण्ड दो प्रकार के होते हैं–अपने गोत्रवाले सपिण्ड और दूसरे गोत्रवाले ( सपिण्ड ) । अपने गोत्रवाले सपिण्ड ये हैं:–अपने ६ वंशज ( अर्थात्–बेटे, पोते, परपोते आदि ६ पीढ़ी तक के वंशज ), ( अपनी ) स्त्री, कन्या, अपनी स्त्रियों और अपने ६–६ वंशजों सहित ( अपने ) ६ पूर्वज ( बाप, दादा, परदादा आदि ६ पीढ़ी तक के पूर्वज), उन छहों पूर्वजों की स्त्रियां और उन छहों के ६–६ पीढ़ी तक के वंशज ) और नवासे, इस प्रकार यहां पर ( मिताक्षरा में ) निश्चय ही ५७ गोत्रज–सपिण्ड माने हैं ।

**एकपिण्डगतांशेन समुद्भूता जना मताः ।**
**सपिण्डा वीर्यसंबन्धादसृक्संबन्धतोऽथवा ॥ ८४ ॥**

एक शरीर में रहे अंश से पैदा हुए पुरुष वीर्य के संबन्ध से या रुधिर के संबन्ध से सपिण्ड माने गये हैं ।

**स्त्रीः कन्यास्तत्सुतांस्त्यक्त्वा षड्वंश्येभ्यः परे पुनः ।**
**सप्तवंश्याश्च षण्णां हि पूर्वजानां तु पूर्वजाः ॥ ८५ ॥**
**सप्ताऽथ तेषां वंश्याश्च प्रत्येकस्य त्रयोदश ।**
**षट् पूर्वजानां षट्षड्भ्यो वंश्येभ्यश्च तथोत्तरे ॥ ८६ ॥**
**सप्त सप्त जनाः शास्त्रे ख्याता आत्मसमोदकाः ।**
**संख्यैषां सप्तचत्वारिंशदुत्तरशतं मता ॥ ८७ ॥**

फिर स्त्रियों, कन्याओं और उनके लड़कों ( नवासों ) को छोड़कर ( अपने ) ६ वंशजों के आगे के ७ वंशज, ( अपने ) ६ पूर्वजों के ७ पूर्वज, उन (७ पूर्वजों) के प्रत्येक के १३-१३ वंशज, और ( अपने ) ६ पूर्वजों के ( प्रत्येक के ) ६-६ वंशजों के आगे के ७-७पुरुष ( वंशज ) शास्त्र में अपने समानोदक कहे गये हैं। इनकी संख्या १४७ मानी गई है।

**निवापाञ्जलयः श्राद्धे दीयन्ते सद्द्विजैर्यतः।**
**समोदकान् समुद्दिश्य तस्मात्ते तु समोदकाः॥ ८८॥**

क्योंकि श्रेष्ठ द्विजों द्वारा श्राद्ध में समोदकों के लिए जल की अञ्जलियां दी जाती हैं, इसलिए वे समानोदक कहाते हैं।

**गोत्रजातसपिण्डानामेव भेदाविमावुभौ।**
**सपिण्डा अग्रिमास्तत्र परे चाथ समोदकाः॥ ८९॥**

ये दोनों भेद गोत्रज-सपिण्डों के ही है। यहां पर अगाड़ी के सपिण्ड हैं और बाद के समानोदक।

**गोत्रजातसपिण्डा वा तथैव च समोदकाः।**
**स्युः परम्परया पुंसां मिथः संबन्धमाश्रिताः॥ ९०॥**

गोत्रज सपिण्ड और उसी प्रकार समानोदक आपस में पुरुषों की परम्परा से संबद्ध होते हैं। (अर्थात्-अपने और अपने सपिण्डों तथा समानोदकों के बीच पुरुषों द्वारा ही संबन्ध होता है, स्त्रियों द्वारा नहीं होता।)

**भिन्नगोत्रसपिण्डास्तु स्त्रियाः संबन्धमाश्रिताः।**
**स्त्रीभिर्वा, बान्धवाश्चाथ ते तु मैताक्षरे मते॥ ९१॥**

दूसरे गोत्रवाले सपिण्ड स्त्री के द्वारा या स्त्रियों के द्वारा संबन्ध रखनेवाले होते हैं और वे मिताक्षरा के मत में बन्धु कहे जाते है।

**किन्तु दायेषु दौहित्रा भिन्नगोत्रभवा अपि।**
**सह गोत्रिसपिण्डैस्तु दायभाजो मता जनैः॥ ९२॥**

परन्तु दूसरे गोत्र में उपन्न हुए भी नवासे लोगों द्वारा गोत्रज सपिण्डों के साथ हिस्सा लेनेवाले माने गये हैं।

**पितृद्वारेण संबद्धा ये समानाद्धि पूर्वजात्।**
**सप्तवंश्यक्रमस्थाश्च सपिण्डास्तेऽपि संमताः॥ ९३॥**

**मातृद्वारेणसंबद्धा ये समानात्तु पूर्वजात्।**
**पञ्चवंश्यक्रमस्थाश्च सपिण्डास्तेऽपि निश्चितम्॥ ९४॥**

जो समान (common) पूर्वज से पिताके द्वारा संबद्ध (related) हों और सात पीढ़ी में हों, वे भी सपिण्ड माने गये हैं। जो समान-पूर्वज से माता के द्वारा संबद्ध हों और पांच पीढ़ी में हों, वे भी निश्चय ही सपिण्ड होते हैं।

**वंश्यक्रमेऽत्र स्वस्यापि ग्रहोविद्वद्भिरीरितः ।**
**गणनायां निजत्याग एकौन्यं जायते पुनः ॥ ९५ ॥**

विद्वानों ने यहां पर (इस विषय में) पीढ़ी में अपना भी लेना कहा है । फिर गिनती में अपने को छोड़देने से एक की कमी हो जाती है । (सात के बदले छह और पांच के बदले चार पीढ़ी तक ही सपिण्डता रहती है ।)

**इत्थं मिताक्षरायां तु शब्दः सापिण्ड्यसूचकः ।**
**द्विधा प्रयुक्तो द्वौ भिन्नौ सूचयत्याशयाविह ॥ ९६ ॥**

इस प्रकार मिताक्षरा में सपिण्डता का सूचक (सपिण्ड) शब्द दो प्रकार से प्रयोग में आया है और यहां पर दो भिन्न–भिन्न आशयों को प्रकट करता है ।

## सपिण्डानां समानोदकानां च सूचनापत्रम्

### सपिण्डों और समानोदकों का नकशा

पिता १३.........वंशज १ से १३<br>
पिता १२.........वंशज १ से १३<br>
पिता ११.........वंशज १ से १३<br>
पिता १०.........वंशज १ से १३<br>
पिता ९.........वंशज १ से १३<br>
पिता ८.........वंशज १ से १३<br>
पिता ७.........वंशज १ से १३

स्त्री = पिता ६...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
स्त्री = पिता ५...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
स्त्री = पिता ४...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
स्त्री = पिता ३...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
स्त्री = पिता २...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
स्त्री = पिता १...पुत्र-१ पुत्र-२ पुत्र-३ पुत्र-४ पुत्र-५ पुत्र-६ पुत्र ७ से १३<br>
| |<br>
स्त्री = स्वयं<br>
| |<br>
कन्या पुत्र १<br>
| |<br>
नवासा पुत्र २<br>
|<br>
पुत्र ३<br>
|<br>
पुत्र ४<br>
|<br>
पुत्र ५<br>
|<br>
पुत्र ६<br>
|<br>
पुत्र ७ से १३ तक

( इस नकशे में सपिण्ड छोटे अक्षरों में और समानोदक बड़े अक्षरों में दिखलाए गये हैं । )

स्त्री पति के दिये ( या दाय में पाये ) धन को पति के मरने पर अपनी इच्छानुसार काम में ले। परन्तु उसकी जीवित अवस्था में तो उस ( धन ) की रक्षा करे अथवा उस ( पति ) के कुल में सौंप दे।

**अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता।**
**भुञ्जीतामरणात् क्षान्ता दायादा ऊर्ध्वमाप्नुयुः॥**

विना पुत्रवाली विधवा पति की शय्या की रक्षा करती हुई ( सतीत्व से रहती हुई ) तथा अपने से बड़े ( रक्षक ) की संरक्षकता में रहती हुई और मर्यादा से चलती हुई मरण पर्यन्त धनका उपभोग करे। उसके बाद हक़दार धन को लेवें।

**अधुना तु—**

आजकल तो—

**मृते पत्यौ तु तद्दत्तं स्त्री व्ययेत यथेप्सितम्।**
**तस्मिञ्जीवति तद्दत्तं रक्षेद्वा रक्षयेन्निजैः॥ ७६०॥**

स्त्री पति के मरने पर उसके दिये धनको इच्छानुसार खर्च कर सकती है। ( परन्तु ) उस ( पति ) के जीवित रहने पर उसके दिए हुए की रक्षा ( स्वयं ) करे या अपने लोगों ( kindred ) द्वारा करवावे।

**पुत्रहीना सती भार्या विधवा रक्ष्युपाश्रया।**
**मर्यादया व्ययेतार्थमाजीवं च ततस्तु सः॥ ७६१॥**
**यायादन्यान् हि दायादानिति कात्यायनोक्तयः।**
**लभ्यन्ते याः कृतास्ताभिर्मितस्वाम्याः स्त्रियो नये॥ ७६२॥**

पुत्र हीन अच्छे आचरणवाली और रक्षक के पास रहनेवाली विधवा पत्नी अपने जीवनभर मर्यादा के साथ धन खर्च कर सकती है और उसके बाद वह ( धन ) दूसरे हकदारों को मिलता है--ऐसे कात्यायन के जो वचन मिलते हैं, उनसे कानून में स्त्रियां परिमित अधिकारवाली करदी गई है।

**नारदः स्थिरवर्जं हि पत्युः प्राप्तं तु यद्धनम्।**
**वैधव्ये सा यथेच्छं तद् व्ययेतेत्येव मन्यते॥ ७६३॥**

नारद पति से मिला स्थिर को छोड़कर जो दूसरा धन है, उसे वह ( स्त्री ) विधवापन में अपनी इच्छानुसार खर्च कर सकती है ऐसा ही मानते हैं।

**पैतृकं तु परित्यज्याऽन्यस्त्रीपुंसेभ्य आगते।**
**दाये पूर्णोऽधिकारी स्यान्नरो मैताक्षरे मते॥ ७६४॥**

पिता, दादा और परदादा के धन को छोड़कर दूसरे स्त्रियों या पुरुषों से आये दाय ( हकदारी के—धन ) में पुरुष, मिताक्षरा के मत से, पूर्ण अधिकारी होता है।

**अन्यत्र तस्याऽधिकृतिः पूर्णैव परिकल्पिता।**
**पैतृकेऽपैतृके दाये न भिदा तत्र वर्तते॥ ७६५॥**

दूसरे स्थानों पर ( दायभाग के मत में ) उस ( पुरुष ) का पूरा अधिकार निश्चित किया गया है। उन स्थानों पर पैतृक ( बाप-दादों के ) और दूसरे ( इकमें मिलनेवाले ) धनमें भेद नहीं है।

**दायप्राप्ते धने स्त्रिया दायादाः।**

हकदारी में पाये धन में स्त्री के हकदार।

**वङ्गेषु विधवा भार्या पुत्री माता पितामही।**
**प्रपितामह्यपि पुनः पुंसां दायहराः स्त्रियः॥ [ २३६ ]**

बंगाल में विधवा पत्नी, लड़की, माता, दादी और परदादी पुरुषों का दाय लेने-वाली ( उत्तराधिकार पानेवाली ) स्त्रियां हैं।

**मिताक्षरायां विधवा स्त्री कन्याऽम्बा पितामही।**
**प्रपितामह्यथ पुनः पुंदायार्हाः स्त्रियो मताः॥ [ २४० ]**

मिताक्षरा में ( भी ) विधवा पत्नी, लड़की, मा, दादी और परदादी पुरुषों का दाय ( धन ) पाने योग्य स्त्रियां मानी गई हैं।

**पौत्र्यस्तथा च दौहित्र्यो भगिन्यश्च यथाक्रमम्।**
**मिताक्षरानुगेष्वद्य दायार्हा नव्यरीतितः [ २४३ ]**

तथा मिताक्षरा के अनुसार चलनेवालों में नवीन रीति ( ई० सं० १६२६ के The Hindu law of Inheritance ( Amendment ) Act 1920 ) से आजकल पोतियां, नवासियां और बहनें क्रम से हकदार होती हैं।

**मानवं शास्त्रमाश्रित्य द्रविडे भगिनी निजा।**
**सोदर्याऽथा प्यसोदर्या पौत्री दौहित्रिका तथा [ २४४ ]**
**भ्रातृकन्या स्वसुः पुत्री पितृव्यस्य सुता पुनः।**
**सर्वा एताः स्त्रियश्चापि संख्याता दायभागिषु [ २४५ ]**

मानव धर्मशास्त्र का आधार लेकर मद्रास में अपनी सगी बहन, सौतेली बहन, पोती, नवासी, भतीजी, भानजी, और चाचा की पुत्री—ये सब स्त्रियां भी ( श्लोक २४० में कही स्त्रियों के अतिरिक्त ) हक पानेवालों में गिनी गई हैं।

**पञ्चाष्ट-नव-चन्द्राऽब्द-दायशोधि विधानतः।**
**पूर्वं बन्धुत्वतः पौत्र्यो दौहित्र्यश्चाथ जामयः॥ ७६६॥**
**दायार्हा द्रविडे ह्यासन् विधानोर्ध्वं परन्तु ताः।**
**दायार्हा अभवन्साधं गोत्रजातसपिण्डकैः॥ ७६७॥**

( विक्रम ) संवत् १६८५ ( ई० सं० १६२६ ) के हकदारी का संशोधन करने-वाले कानून ( The Hindu law of Inheritance ( Amendment ) Act ) से पहले मद्रास में पोतियां, नवासियां और बहनें बन्धु होने के कारण दाय-धन पाती

औः परन्तु उक्त विधान ( कानून के पास होने ) के बाद ( वे ) गोत्रज-सपिण्डों के अन्य दाय-धन लेने योग्य हो गई हैं ।

महाराष्ट्रमृतेऽन्यत्र स्त्रीपुंसेभ्यः समागते ।
दाये मिताऽधिकाराऽर्हाः स्त्रीदायादा मताबुधैः ॥ ७६८ ॥

विद्वानों ने बंबई-प्रदेश को छोड़कर दूसरी जगह ( अर्थात्--बङ्गाल, बनारस, मिथिला और मद्रास में ) स्त्रियों या पुरुषों से मिले दाय ( उत्तराधिकार के धन ) मे ( पूर्वोक्त ) स्त्री हकदारों को परिमित ( आजीवन ) अधिकार वाली माना है ।

महाराष्ट्रेऽधवा पत्नी कन्याम्बा च पितामही ।
प्रपितामह्यपि पुनर्दायार्हाः स्युस्तथैव च ॥ ७६९ ॥
आपञ्च पुरुषं नूनं वंश्यपूर्वजयोस्तथा ।
भिन्नशाखागतानां तु वंशजानां सुताः पुनः ॥ ७७० ॥
गोत्रजातसपिण्डानां पत्न्यो मृतधवा अपि ।
संमता दायलाभार्हास्तत्रत्यैर्न्यायशास्त्रिभिः ॥ ७७१ ॥

बंबई-प्रान्त में विधवा पत्नी, लड़की, माता, दादी और परदादी भी दाय पाने योग्य होती हैं । तथा उसी प्रकार वहां के कानून के विद्वानों ने निश्चितरूप से पांच पीढ़ी तक के वंशजों और पूर्वजों की तथा भिन्न शाखा में रहे वंशजों ( collaterals ) की लड़कियों को तथा गोत्रज सपिण्डों की विधवा स्त्रियों को भी दाय-प्राप्ति के योग्य माना है ।

उत्पन्नया प्रमीतस्य गोत्रेऽत्रार्थाधिकारिणः ।
विवाहेनाऽपरं गोत्रं गतया च स्त्रिया तथा ॥ ७७२ ॥
तत्पुत्रीभिर्हि संप्राप्तं स्त्रीपुंसेभ्यस्तु यद्धनम् ।
दाये तत्तु मतं तत्र स्त्रीधनं सुविनिश्चितम् ॥ ७७३ ॥

यहां पर मरे हुए धन के अधिकारी के गोत्र में उत्पन्न हुई और विवाह के द्वारा दूसरे गोत्र में गई स्त्री ने या उसकी कन्याओं ने स्त्री या पुरुष से जो धन दाय ( हकदारी inheritance ) में पाया हो उसे वहां पर ( बंबई प्रान्त में ) निश्चय स्त्री-धन माना है ।

मिताक्षरानुगानां तत्तत्रोक्तप्रथया व्रजेत् ।
मयूखानुगतानां च यायात्तत्रोक्तरीतितः ॥ ७७४ ॥

मिताक्षरा को माननेवालों का वह ( स्त्री-धन ) उसमें कही रीति से जाता है और व्यवहारमयूख को माननेवालों का ( स्त्री-धन ) उसमें कही रीति से जाता है ।

तत्रैव च निजं गोत्रं विवाहेन प्रविष्टया ।
नरेभ्योऽधिगतो दायो मिताऽधिकृतिको मतः ॥ ७७५ ॥

और वहीं ( बंबई-प्रदेश में ) विवाह के द्वारा अपने गोत्र में घुसी स्त्री ( भार्या

आदि ) द्वारा पुरुषों से पाया उत्तराधिकार का धन परिमित अधिकार वाला माना गया है ।

स्त्रीभ्यो गोत्रसपिण्डानामप्याप्तं पुंधनं तु यत् ।
स्वगोत्राऽगतया नार्या तद् मिताऽधिकृति स्मृतम् ॥ ७७६ ॥

गोत्रज सपिण्डों की स्त्रियों के द्वारा भी अपने गोत्र में आई स्त्री को मिला जो पुरुष का धन हो, वह परिमित अधिकार वाला ही माना गया है ।

स्त्रीधनं तु पुनस्ताभिरपि प्राप्तं स्त्रिया धनम् ।
भवेत्तच्च पुनर्यायात्तस्या एवोत्तरान् ध्रुवम् ॥ ७७७ ॥

उन ( विवाह द्वारा अपने गोत्र में आई हुई ) स्त्रियों को मिला हुआ भी स्त्री-धन तो स्त्री का धन ही होता है । और फिर वह निश्चय ही उसी के उत्तराधिकारियों को मिलता है ।

दायो मिताऽधिकारेऽन्ते प्रत्येति स्वप्रभूत्तरम् ।
पूर्णाऽधिकारे किन्त्वेष जनमेत्युत्तरं स्त्रियाः ॥ ७७८ ॥

परिमित ( आजीवन ) अधिकार में दाय अन्त में ( अधिकारिणी के बाद ) अपने मालिक के उत्तराधिकारी के पास लौट जाता है । परन्तु पूर्ण अधिकार मे वह ( उस ) स्त्री के उत्तराधिकारी को ही मिलता है ।

दायभागः स्त्रियै दत्तः पत्या पुत्रैश्च पौत्रकैः ।
सामान्येनाऽत्र प्रत्येति तदन्ते पुत्रपौत्रकान् ॥ ७७९ ॥

यहां पति, पुत्र या पौत्रों द्वारा स्त्री को दिया उत्तराधिकार के धन का हिस्सा साधारण तौर पर उसके बाद बेटों और पोतों को वापस मिल जाता है ।

जैनी स्त्री स्वार्जिते पत्युर्धने पूर्णाऽधिकारिणी ।
क्वचित्,क्वचित्स्त्रियोऽप्यन्यास्तादृश्यः स्युः प्रथाबलात्॥७८०॥

कहीं जैनधर्मानुयायिनी स्त्री पति के खुद के कमाये धन में पूर्ण अधिकार वाली होती है और कहीं दूसरी स्त्रियां भी रिवाज के बल पर उसीके समान ( पूर्णाधिकार वाली ) हो जाती हैं ।

सारमेतद्धि विज्ञेयं पूर्वोक्तस्य बुधैस्तु यत् ।
द्रविडे मिथिलायां च वाराणस्यां च वङ्गके ॥ ७८१ ॥
पुंस्त्रियोर्दायरूपेण प्राप्तेऽर्थे योषितो मताः ।
मितस्वाम्याश्च तन्मृत्यौ स प्राक्पूर्णाधिकारिणः ॥ ७८२ ॥
अन्यं नेदिष्ठदायादं यायान्न तु मृतस्त्रियाः ।
दायादं, हि यतो नासीत्सा तत्पूर्णाधिकारिणी ॥ ७८३ ॥

विद्वानों को पहले कहे का यह सार जानना चाहिए कि मद्रास, मिथिला, बनारस और बंगाल में पुरुष और स्त्री से दायरूप में पाये धन में स्त्रियां परिमित अधिकार

वाली मानी गई हैं और उसके मरने पर वह ( धन ) ( उस स्त्री से ) पहले के पूर्ण अधिकारी के ( उस मृत स्त्री से ) दूसरे सब से नजदीक के हकदार को मिलता है। मरनेवाली स्त्री के हकदार को नहीं मिलता; क्योंकि वह ( स्त्री ) उस ( धन ) की पूर्ण अधिकारिणी नहीं थी।

**हित्वा परिणय-द्वारा मृतगोत्रं गताः स्त्रियः ।**
**अपराभिर्हृतो दायो महाराष्ट्रे स्त्रिया धनम् ॥ ७८४ ॥**

विवाह के द्वारा मृत ( पुरुष ) के गोत्र में गई स्त्रियों को छोड़कर दूसरी स्त्रियों ने पाया दाय-धन बंबई प्रान्त में स्त्री-धन होता है

**विवाहेनागताभिस्तु मृतस्यार्थाधिकारिणः ।**
**गोत्रे स्त्रीभिर्हि-संप्राप्तः पुं दायो न स्त्रिया धनम् ॥ ७८५ ॥**
**अपूर्णमेव तत्स्वाम्यं तत्र, यत्तत्प्रयाति सः ।**
**प्राक् पूर्णस्वामिनो दायहरांस्तासां मृतौ ध्रुवम् ॥ ७८६ ॥**

विवाह के द्वारा मृत धन के अधिकारी के गोत्र में आई हुई स्त्रियों द्वारा प्राप्त किया पुरुष का दाय-धन स्त्री-धन नहीं होता। क्योंकि उन ( स्त्रियों ) का उस पर परिमित अधिकार ही होता है। इसलिए उन ( स्त्रियों ) के मरने पर, निश्चय ही, वह ( धन ) पहले के पूर्ण स्वामी के हकदारों को मिलता है।

### स्त्रीदायादानां दायप्राप्तेऽर्थेऽधिकारः ।

स्त्री हकदारों का दाय ( हकदारी ) में पाये धन पर अधिकार।

**द्रविडे मिथिलायां च वाराणस्यां च वङ्गके ।**
**स्त्रीभ्यो वा पुरुषेभ्यस्तु प्राप्ते दाये स्त्रियः खलु ॥ ७८७ ॥**
**मितस्वाम्या अतस्त्वर्थस्वामिनो विधवा तथा ।**
**कन्या माता पितुर्माता प्रितामहजनिः पुनः ॥ ७८८ ॥**
**पौत्री चाप्यथ दौहित्री भगिनी च मता बुधैः**
**मिताधिकारा दायाप्तसंपत्तौ नात्र संशयः ॥ ७८९ ॥**

मद्रास में मिथिला में बनारस में और बंगाल में स्त्रियों से या पुरुषों से मिले दाय ( हकदारी के धन ) में स्त्रियां, निश्चय ही, परिमित अधिकारवाली होती हैं, इसलिए विद्वानों ने धन के स्वामी की विधवा पत्नी, कन्या, माता, दादी, परदादी, पोती, नवासी और बहन को दाय ( inheritance ) में पाये धन में परिमित ( limited ) अधिकार वाली माना है। इसमें संशय नहीं है।

**एवमेव स्त्रियः सर्वाः स्त्र्यर्थदायहरास्तथा ।**
**स्त्रीबान्धवा अपि मितस्वाम्याः स्युर्द्रविडे पुनः ॥ ७९० ॥**

इसी प्रकार स्त्री-धन का दाय लेनेवाली सारी स्त्रियां ( Stri--dhan heirs )

भी ( मिताधिकारिणी ) होती हैं। फिर मद्रास में स्त्री--बन्धु भी परिमित अधिकार वाले ही होते हैं।

महाराष्ट्रे स्त्रियः सर्वाः स्त्रीणां दायहरास्तु याः।
पूर्णस्वाम्या मतास्तास्तु दायाप्तेऽपि धने ध्रुवम्॥ ७६१॥

बंबई प्रान्त में जो स्त्रियों का दाय प्राप्त करनेवाली सारी स्त्रियां है, वे निश्चय ही दाय में पाये धन में भी पूर्ण अधिकार वाली मानी गई हैं।

पुंसो दायहरा यास्तु मृतस्यार्थाधिपस्य हि।
विवाहेनागता गोत्रमधवा स्त्री प्रसूस्तथा॥ ७६२॥
पितामही च जनकपितृमाताऽधवाःपुनः।
गोत्रजातसपिण्डानां मितस्वाम्या हि ता अपि॥ ७६३॥

पुरुष का दाय--धन लेनेवाली और विवाह के द्वारा मरे हुए धन के स्वामी के गोत्र में आई जो स्त्रियां ( धन के स्वामी की ) विधवा पत्नी, माता, दादी, परदादी और गोत्रज सपिण्डों की विधवायें है, वे भी परिमित अधिकार वाली होती हैं।

गोत्रजातसपिण्डानां विधवाः स्युः स्नुषाधवा।
मृतभ्रातृपितृभ्रांत्रादीनां चापि स्त्रियस्तथा॥ ७६४॥

गोत्रज सपिण्डों की विधवा स्त्रियां--विधवा पुत्र वधू, मरे हुए भाइयों की स्त्रियां, मरे हुए चाचाओं की स्त्रियां आदि होती हैं।

अन्या मृतस्य धनिनो गोत्रोत्पन्नाः स्त्रियः खलु।
दायाप्तेऽपि धने पूर्णस्वाम्या एव मताः परम्॥ ७६५॥

परन्तु दूसरी मरे हुए धन के स्वामी के गोत्र में उत्पन्न हुई स्त्रियां दाय में मिले धन में भी निश्चय ही पूर्ण अधिकारवाली ही मानी गई हैं।

गोत्रोत्पन्नास्तु दुहिता भगिनी भ्रातृजादयः।
मृतस्य धनिनो विज्ञैर्विज्ञेया निश्चयेन हि॥ ७६६॥

गोत्र मे उत्पन्न स्त्रियां तो विद्वानो को निश्चय रूप से मृत धनिक की लड़की, बहन, भतीजी, आदि को जानना चाहिए।

महाराष्ट्रमृतेऽन्यत्र तस्मात्तु धनिनोऽधवा।
माता पितामही तातपितृमाता सुता तथा॥ ७६७॥
पौत्री दौहित्रिकाप्येवं भगिनी चापि निश्चितम्।
मितस्वाम्या मताः प्राप्ते पुंसो दाये तु पण्डितैः॥ ७६८॥

इसलिए विद्वानों ने बंबई प्रान्तको छोड़कर दूसरे प्रान्तों में धन के मालिक की विधवा स्त्री, माता, दादी, परदादी, लड़की, पोती, नवासी और बहन को पुरुष से पाये दाय--धन में तो परिमित अधिकार वाली माना है।

महाराष्ट्रे सुता पौत्री दौहित्री भगिनी तथा।
पुंसः प्राप्तेऽपि दाये स्युः पूर्णस्वाम्याः परं ध्रुवम् ॥७९९॥

परन्तु बंबई प्रान्त में निश्चय ही लड़की, पोती, नवासी और बहन पुरुष से प्राप्त किये दाय--धन में भी पूर्ण अधिकार वाली होती है।

स्त्रीप्राप्तास्त्रैणवित्तस्य स्त्रीनाशेऽन्त्याऽमितप्रभोः।
दायार्हा उत्तरा ज्ञेयाः प्रत्यादास्तत्पुनर्ग्रहात् ॥ ८०० ॥

स्त्री के द्वारा प्राप्त किये स्त्री—धनसे भिन्न धन के, ( उस ) स्त्री की मृत्यु के उपरान्त, अन्तिम पूर्णाधिकारी के हक पाने योग्य उत्तराधिकारियों को उस ( धन ) के फिर में लेने के कारण 'प्रत्याद' ( reversioner ) जानना चाहिए।

अप्राप्तदाये प्रत्यादा अपि कर्तुं पणादिकम्।
अक्षमाः स्युर्यतस्तस्य प्राप्तिर्लोकेऽस्त्यनिश्चिता ॥ ८०१ ॥ *

प्रत्याद ( reversioners—अन्तिम पूर्ण-स्वामी का हक पानेवाले ) लोग बिना मिले हकदारी के धनके विषय में किसी प्रकार की प्रतिज्ञा नहीं कर सकते; क्योंकि संसार में उस ( धन ) की प्राप्ति अनिश्चित ही होती है। ( कौन हकदार पहले मरेगा और कौन पीछे यह किसी को मालूम नहीं होता। )

प्रत्यादेभ्यो न प्रत्यादा दायस्वाम्यमवाप्नुयुः।
दायस्याऽधिकृतावन्त्यपूर्णस्वाम्येव कारणम् ॥ ८०२ ॥

प्रत्याद ( अन्तिम पूर्ण स्वामी के हकदार ) लोग ( दूसरे ) प्रत्याद ( अन्तिम पूर्ण स्वामी के हकदार ) के द्वारा दाय ( धन ) का हक नहीं पा सकते। दाय ( धन ) के अधिकार के हक में तो अन्तिम पूर्ण स्वामी ही कारण होता है।

मिताऽधिकृतिकः प्राप्तः पत्युर्दायः स्त्रिया स्मृतः।
स्त्रीदायो विधवादायोऽथवेत्युभयनामतः ॥ ८०३ ॥

स्त्री द्वारा प्राप्त किये परिमित अधिकार वाले पति के दाय (धन) को 'स्त्री-दाय' अथवा 'विधवा-दाय' इन दोनों नामों से कहा गया है।

मिताऽधिकृतिका नार्योऽप्याजीवं प्रभुतां पराम्।
प्राप्नुवन्ति धने नूनं मूलाऽपव्ययवर्जिताम् ॥ ८०४ ॥

परिमित अधिकार वाली स्त्रियां भी ( प्राप्त ) धन के विषय में, मूल धन को अनावश्यक तौर पर खर्च करने के अधिकार को छोड़कर, निश्चय ही, आजीवन पूरी प्रभुता पाती हैं।

शक्तास्तस्य व्यये तास्तु न्याय्यावश्यकताकृते।
तद्धिताय च नेदिष्ठप्रत्यादानुमतेन वा ॥ ८०५ ॥

वे ( स्त्रियां ) न्याय्य ( legal ) आवश्यकता के लिये और उस ( संपत्ति )

के लाभ के लिये या सब से नजदीकी प्रत्याद (reversioner) की अनुमति से उस (दाय-धन) को खर्च कर सकती हैं।

प्रातिनिध्येन पूर्णस्याऽत्राऽन्तिमस्याऽधिकारिणः।
पत्युर्दायहरा नार्यः स्त्रीदायेऽपि तथैव ताः ॥ ८०६ ॥

स्त्रियां निश्चय ही यहां पर अन्तिम पूर्णाधिकारी पति के प्रतिनिधि-रूप से हकदार का धन प्राप्त करती हैं और स्त्री-धन में भी वे उसी तरह (प्रतिनिधि-रूप से) अधिकार प्राप्त करती हैं।

दायस्यांशं त्वधिकृतं केनाप्यनधिकारिणा।
स्वामिनः प्रातिनिध्याद्धि व्यहारेण साऽऽप्नुयात् ॥ ८०७ ॥

किसी अनधिकारी के द्वारा दबाये हुये दाय (धन) के हिस्से को वह (स्त्री) उस दाय के स्वामी की प्रतिनिधि होने से, (दीवानी) मुकद्दमे के द्वारा प्राप्त कर सकती है।

अभियोज्या पुनः सापि पत्युर्ऋणकृते तथा।
प्रत्यादानपि बध्नाति शासनं तत्कृते कृतम् ॥ ८०८ ॥

फिर पति के कर्जों के लिए उस पर भी अभियोग चल सकता है और उस विषय में की गई डिग्री प्रत्यादों (reversioners) को भी बांध लेती हैं (उन पर भी लागू होती है)।

स्थावरं द्वादशाब्दान्तं षडब्दान्तं चलं तथा।
हीनाऽभियुक्ति-परगं धनं नादीयते पुनः ॥ ८०९ ॥

विना अभियोग (मुकद्दमे) के बारह बरस तक पराये अधिकार में रहा स्थावर और छः वर्ष तक रहा अस्थावर धन पीछा नहीं लिया जा सकता।

व्यवहारे न शक्ता चेद् द्वादशाब्दानपीह सा।
तर्हि तस्या अधिकृतिर्नश्यत्यवधिनिर्गमात् ॥ ८१० ॥
प्रत्यादः किन्तु शक्तोऽत्र स्वाधिकाराप्तितो ध्रुवम्।
आ द्वादशाब्दमादातुं व्यवहारेण तद्धनम् ॥ ८११ ॥

यदि वह मुकद्दमा करने में बारह वर्ष (तक) भी समर्थ न हो, तो अवधि के निकल जाने से, उसका अधिकार नष्ट हो जाता है। परन्तु वहां पर उस धन के अन्तिम पूर्ण अधिकारी का उत्तराधिकारी, अपने को अधिकार मिलने के समय से बारह बरस तक, मुकद्दमे के द्वारा निश्चय ही (उसे) लेने में समर्थ होता है।

चेज्जीवन्त्यां स्त्रियामेवाऽभियोगः स्यान्निराकृतः।
कालातिक्रमणात्तर्हि प्रत्यादोऽपि प्रतार्यते ॥ ८१२ ॥

यदि स्त्री के जीते जी ही मयाद निकल जाने से मुकद्दमा खारिज कर दिया गया

हो, तो पूर्णाऽधिकारी का आगे का हकदार भी ( हक से ) वञ्चित कर दिया जाता है।

व्यवहारोद्धृतो लाभभागांशो न्यूनितो यदि ।
पुनर्विचारे तर्हि स्यात्सा तत् प्रत्यर्पभारिणी ॥ ८१३ ॥

यदि फिर विचार ( अपील ) के समय मुकद्दमे के द्वारा प्राप्त किये लाभ के एक भाग को कम कर दिया गया हो तो उसको लौटाने का भार उसी ( स्त्री ) पर रहता है।

आजीवं सा क्षमा मूलस्यायं तु व्ययितुं ध्रुवम् ।
निजेच्छया, स तद्भर्तुर्नो ऋणाय प्रयुज्यते ॥ ८१४ ॥
बद्धा नैव तदायेन सा भर्तुर्वंशजन्मनाम् ।
भृत्य तथा विवाहायै तत् सर्वं मूलवित्तगम् ॥ ८१५ ॥

वह ( स्त्री ) जीवन पर्यन्त ही मूल--धन की आमदनी को इच्छानुसार खर्च कर सकती है। वह ( आमदनी ) पति के कर्जे के लिए काम में नहीं ली जा सकती। वह ( स्त्री ) उस ( मूल--धन ) की आमदनी से पति के रिश्तेदारों की परवरिश करने या उनका विवाह करने को बँधी नहीं होती, क्योंकि वे सब ( बातें ) मूल--धन से संबन्ध रखती हैं।

भाटकं पतिदायाप्तसंपत्तेः स्यात्तदंशकः ।
भर्तृणशोधने तस्योपयोगो न्यायसंमतः ॥ ८१६ ॥

पति से दाय में पाई संपत्ति का किराया ( rent ) उसी ( संपत्ति ) का हिस्सा होता है। पति के कर्जे के चुकाने में उसका उपयोग करना न्याय से माना हुआ है।

न्याय्यकार्याय नेदिष्ठप्रत्यादानुमतेन वा ।
कृतो व्ययः स्त्रिया सर्वसंपदोऽपीह मन्यते ॥ ८१७ ॥

स्त्री द्वारा न्याय्य ( legal ) कार्य के लिये या नजदीकी प्रत्याद ( next reversioner ) की अनुमति से किया सारी संपत्ति का खर्च भी मान्य होता है।

निजमाजीवनस्वार्थं तद्गतं सा क्षमा पुनः ।
विक्रेतुमुपहर्तुं चाधीकर्तुं व्ययितुं तथा ॥ ८१८ ॥

फिर वह ( स्त्री ) उस ( धन ) में रहे अपने जीवन पर्यन्त के स्वार्थ ( life interest ) को बेचने, उपहार में देने, गिरवी रखने या खर्च करने में समर्थ होती है।

पतिवंशस्थितानां तु भृत्यायुपयमाय च ।
तयोर्न्याय्यत्वतः सेशा विक्रेतुं पतिसंपदम् ॥ ८१९ ॥

पति के वंश में रहे हुओं ( रिश्तेदारों ) के भरण और विवाह के लिए, उन दोनों ( बातों ) के न्यायसंगत होने से, वह ( स्त्री ) पति की संपत्ति को बेच सकती है।

दायाप्तपतिसंपत्तेः प्रबन्धे सा क्षमा परम्।
कुर्यान्नापव्ययं तस्याः कर्म तद्धानिकृत्तथा॥ ८२०॥

वह (स्त्री) दाय में पाई पति की संपत्ति का प्रबन्ध कर सकती है। परन्तु (वह) उस (संपत्ति को फ़ज़ूल खर्च तथा उस (संपत्ति) को हानि पहुँचानेवाला काम न करे।

प्रत्यादानामभावेऽपि न्याय्यावश्यकतामृते।
साऽशक्ता तद्व्यये यस्मात्तदन्ते तत्प्रभुर्नृपः॥ ८२१॥

प्रत्यादों (reversioners) के न होने पर भी न्याय्य आवश्यकता के बिना वह (स्त्री) उस (संपत्ति) को खर्च नहीं कर सकती, क्योंकि उस (स्त्री) के बाद उस (धन) का मालिक राजा होता है

दधाना पतिसंपत्तिं स्वामित्वेनापि न क्षमा।
परिवर्तयितुं पत्नी तद्‍गतान्नियमान्ध्रुवम्॥ ८२२॥

पत्नी मालिक बनकर पति की संपत्ति को रखती हुई भी उसके साथ लगे नियमों को, निश्चय ही, नहीं बदल सकती।

महाराष्ट्रमृतेऽन्यत्र पुत्र्यादिभिरपि ध्रुवम्।
प्राप्ते परिमितस्वाम्ये दाय एषैव पद्धती॥ ८२३॥

बंबई प्रान्त को छोड़ कर और जगहों पर लड़कियों आदि द्वारा प्राप्त किये परिमित अधिकार वाले दाय-धन मे भी निश्चय ही यही तरीका है।

प्राप्ताधिकारा विधवा मितस्वाम्यास्तथाऽपराः।
स्त्रियो दायाप्तसंपत्तेरायं तु व्ययितुं क्षमाः॥ ८२४॥
यावज्जीवं यथेच्छं हि पूर्णस्वाम्यतया, ततः।
न ताः प्रत्यादनिक्षेपरक्षिकाः केवलं मताः॥ ८२५॥

अधिकार प्राप्त करने वाली विधवा और परिमित अधिकार वाली दूसरी स्त्रियां जीवनपर्यन्त पूरे अधिकार वाली होने से, दाय (हकदारी) में पाई संपत्ति की आमदनी को ख़र्च कर सकती हैं। इसलिये वे केवल प्रत्याद (reversioner) के सौंपे हुए धन की रक्षा करनेवाली (trusty) ही नहीं मानी गई हैं।

दायं संत्यज्य लेखेनाजीवं भोगकृतेऽत्र या।
लब्धा संपत्तदायस्तु लेखस्य दिवसात्पुनः॥ ८२६॥
मूलतो भिन्नतां याति तदर्थं न ततो भवेत्।
स्त्रियाः स्वाम्यस्य शङ्का तत्सञ्चयेऽपि सुनिश्चितम्॥ ८२७॥

फिर यहां पर हकदारी (succession) में पाये हुए को छोड़कर लेख के द्वारा जो संपत्ति आजीवन भोग के लिए पाई हो, उसकी आमदनी, लेख लिखने के दिन

मे ही, मूल धन से भिन्न हो जाती है। इस लिये, उस (आमदनी) के इकट्ठी हो जाने पर भी, उसके लिये निश्चय ही, स्त्री के अधिकार के विषय मे शङ्का नहीं होती।

**परं दायाप्तसंपत्तेरायो यत्रोपचीयते।**
**तस्यां स्थितायामन्यस्य स्वाम्ये स्त्र्यधिकृतौ तथा ॥८२८॥**
**तत्र तूपचितायस्तु स्त्र्यर्थो वा नेति निश्चये।**
**निम्नरीत्या विभज्यैव निर्णयोऽस्य विधीयते ॥ ८२९ ॥**

परन्तु जहां पर दाय (हकदारी) में पाई संपत्ति की आमदनी, उस (संपत्ति) के दूसरे के अधिकार में रहते समय या स्त्री के अधिकार में रहते समय इकट्ठी हो जाती है, वहां पर इकट्ठी हुई आमदनी स्त्री धन है या नहीं इसके निश्चय करने में नीचे लिखी रीति से विभाग करके ही इसका निर्णय किया जाता है।

**यस्तु जीवति पत्यौ वा स्वाम्येऽन्यपुरुषस्य वा।**
**पूर्वाधिकारिणस्त्वायोपचयः स्यात्तथा च यः ॥ ८३० ॥**
**मरणान्ते तयोः प्राक् च नार्या अधिकृतेर्भवेत्।**
**आयस्य संचयो वाथ कृतः स्याद्यस्तया स्वयम् ॥ ८३१ ॥**
**स्वाम्यमायस्य वा तस्योपचयस्य त्वनिश्चितम्।**
**यत्र तत्र तदायस्य पूर्वोत्तरचयौ च यौ ॥ ८३२ ॥**
**तथा पत्या प्रदत्तो यः स्त्रियै स्वस्यायसंग्रहः।**
**इच्छापत्रेण वा लेखपत्रेणाथ भवेत्पुनः ॥ ८३३ ॥**
**वृद्धिरन्यप्रकारेण संपत्तेर्या तु निश्चिता।**
**इतीदृक् षड्विधो ज्ञेय आयस्योपचयो बुधैः ॥ ८३४ ॥**

जो आमदनी का संग्रह पति के जीते जी या (स्त्री से) पहले के अन्य अधिकारी पुरुष के समय हुआ हो अथवा जो आमदनी का संग्रह उन दोनों (उपर्युक्त पति या अन्य पूर्वाधिकारी पुरुष) के मरने के बाद और स्त्री के अधिकार के पहले हुआ हो या जो उस (स्त्री) ने स्वयं किया हो या जहां पर आमदनी या उसके, संचय का अधिकार निश्चित न हो (अर्थात् उनका स्वामी कौन है यह अनिश्चित हो) वहां पर पहले और दूसरे (आमदनी या आमदनी के संग्रह) के संचय हुए हों अथवा पति ने अपनी आमदनी का जो संग्रह इच्छापत्र से या लेख-पत्र (deed) से स्त्री को दिया हो या फिर जो दूसरे प्रकार से संपत्ति की निश्चित वृद्धि हुई हो—इस प्रकार विद्वानों को छह प्रकार का आमदनी का संग्रह जानना चाहिए।

**संपत्तेर्हि समो नूनं प्रथमस्त्वायसञ्चयः।**
**तत्र तस्य मितस्वाम्यमेवाप्नोति ततस्तु सा ॥ ८३५ ॥**

प्रथम प्रकार का आमदनी का संग्रह संपत्ति (मूल-धन) के समान होता है।

इसलिए वहां पर वह ( स्त्री ) उस ( आमदनी के संग्रह ) का परिमित अधिकार हो पाती है।

द्वितीयेऽथ तृतीयेऽत्राऽभिप्रायेणैव तु स्त्रियाः।
आयसञ्चयवित्तस्य भागत्वं प्राप्तसंपदः॥ ८३६॥
अथवा स्त्रीधनत्वं हि बुधैर्निर्णीयते ततः।
स्त्र्यर्थ एव स नो यत्र सूचितः स्यात्तयाऽन्यथा॥ ८३७॥

यहां पर दूसरे और तीसरे में विद्वानों द्वारा स्त्री के अभिप्राय से ही आमदनी से इकट्ठे हुए धन का पाई हुई संपत्ति का भाग होना या स्त्री-धन होना निश्चित किया जाता है। इसलिए जहां पर अन्य प्रकार से सूचित न किया हो ( अर्थात्-उस संचय को संपत्ति का भाग न प्रकट किया हो ) वहां पर वह स्त्री--धन ही होता है।

आयक्रीता स्थिरा संपद्दीर्घकालोत्तरं न सा।
पुत्र्यै दातुं समर्था यत्सांशः स्यात्प्राप्तसंपदः॥ ८३८॥
परं क्रयोत्तरं तां तूपयुञ्जाना निजार्थवत्।
शक्ता दातुं यथेच्छं सा स्त्र्यर्थस्तत्र तु सा मता॥ ८३९॥

( संपत्ति की ) आमदनी से खरीदी हुई स्थिर संपत्ति को वह ( स्त्री ) बहुत समय के बाद पुत्री को देने में समर्थ नहीं होती, क्योंकि वह प्राप्त की हुई संपत्ति ( मूल--धन ) का भाग हो जाती है। परन्तु खरीदने के बाद उसका अपने ( स्त्री ) धन की तरह उपयोग करती हुई वह ( स्त्री ) ( उसे ) अपनी इच्छानुसार दे सकती है; क्योंकि वहां पर वह स्त्री--धन मानी गई है।

दद्यात्स्वोत्तरप्रत्यादायाप्तार्थायांशमत्र या।
ऋणे प्राक्, प्राप्नुयादन्ते शासनं तद्ग्रहाय च॥ ८४०॥
परं ग्रहणतः पूर्वं सा म्रियेत तदा ध्रुवम्।
तस्याः स्त्र्यर्थाधिकारी तदृणादाने क्षमोभवेत्॥ ८४१॥

जो ( स्त्री ) यहां पर पहले अपने बाद के प्रत्याद-हकदार ( reversioner ) को पाये हुए धन की आमदनी का कुछ भाग कर्ज दे और फिर उसको प्राप्त करने के लिए डिग्री प्राप्त करे, परन्तु उसके लेने के पहले ही वह ( स्त्री ) मरजाय, तो निश्चय ही उस (स्त्री) का स्त्री--धन का हकदार उस कर्जे को वसूल करने में समर्थ होता है।

स्वामिन्या पतिसंपत्तेः क्रीता विधवया तु या।
प्राक्क्रयस्याधिकारेण तत्संपत्पार्श्वसंस्थिता॥ ८४२॥
संपत्तिः स्यात्स्त्रिया वित्तं चेन्नो पत्यर्थतः क्रयः।
प्राक्क्रयस्याधिकारात्तिस्तत्र नो बाधते ध्रुवम्॥ ८४३॥

पति की संपत्ति की मालिक बनी विधवा ने उस संपत्ति के पास में रही संपत्ति पहले खरीद सकने ( pre--emption--हक शफा ) के अधिकार से खरीदी हो, परन्तु

यदि वह पति के धन ( मूल--धन ) से नहीं खरीदी गई हो, तो स्त्री--धन होती है ; पहले खरीद सकने ( हक़--शफा ) के अधिकार की प्राप्ति ( जो कि पति की संपत्ति की मालिक होने से मिली थी ) निश्चय ही, उसमें बाधा नहीं डालती ।

वङ्गे दायाप्तसंपत्तेरायो न व्ययितः स्त्रिया ।
परं स तद्गृहीतोऽर्थो अर्थः स्त्र्यर्थ इवाहितः ॥ ८४४ ॥
यत्र तत्र स एकेषां मते नार्युत्तरान् व्रजेत् ।
शक्ता तेषां मते दातुं स्वेच्छापत्रेण तं च सा ॥ ८४५ ॥
अन्येषां स मते यायात्तत्पत्युर्दायहारिणः ।
इच्छापत्रेण तद्दानेऽप्यक्षमा सा च तन्मते ॥ ८४६ ॥
पूर्वेषां निर्णयस्त्वत्र प्रागुक्तनियमानुगः ।
अन्येषां तद्विरुद्धोऽपि कैश्चित्तत्र समादृतः ॥ ८४७ ॥

बंगाल में जहां पर स्त्री ने दाय ( हकदारी ) मे पाई संपत्ति की आमदनी खर्च नहीं की हो, परन्तु उसे और उससे प्राप्त ( खरीदे ) धन को स्त्री--धन की तरह रक्खा ( treat किया ) हो, वहां पर कुछ के ( जज Mitter ) के मत में वह ( आमदनी ) स्त्री के ( मरने पर उसके ) उत्तराधिकारियों को मिलती है और उनके मत में वह ( स्त्री ) उसे इच्छापत्र ( will ) से दे सकती है । दूसरों के ( जज Page ) के मत में वह ( आमदनी ) उस ( स्त्री ) के पति के हकदारों को मिलती है और उनके मत में वह उसको इच्छापत्र से देने में भी असमर्थ होती है । यहां पर पहलेवालों का निर्णय पहले कहे नियमों के अनुकूल है और दूसरों का उसके विरुद्ध होने पर भी वहां पर ( बंगाल में ) कुछ लोगों ने मानलिया है ।

वङ्गेऽथ कोशले चेन्नाऽधवया व्ययितः स्वयम् ।
जीवन्त्याप्तधनस्यायः शासनं तत्कृते तथा ॥ ८४८ ॥
प्राप्तं नैवोपयुक्तं वा नोपयुक्तस्तथैव च ।
अनिश्चितस्वाम्य आयश्चतुर्थे स तदाऽक्षमा ॥ ८४९ ॥
अर्थान्प्राक्कथितान्दातुमिच्छापत्रेण तत्र तु ।
तदन्ते यान्ति ते सर्वे तत्पतेरेव चोत्तरान् ॥ ८५० ॥
तदाशयस्तथान्यत्र मुख्यो निर्णायको मतः ।
तदिच्छाया विरोधस्याऽभावेऽप्येष स्त्रिया धनम् ॥ ८५१ ॥

बंगाल में और अवध में यदि जीती हुई विधवा ने पाये हुए धनकी आमदनी को खुद खर्च न किया हो या उसके लिए प्राप्त की हुई डिग्री को काम में नहीं लिया हो अथवा अनिश्चित स्वाम्य ( held in suspense ) वाली आमदनी का उपभोग नहीं किया हो, तो वहां पर चौथी हालत में वह ( स्त्री ) पहले कहे धनों को इच्छापत्र से नहीं दे सकती, तथा उसके बाद वे सब उसके पति के ही उत्तराधिकारियों को

मिलते हैं। दूसरे स्थानों पर (तो) उस (स्त्री) का अभिप्राय (ही) मुख्य निर्णायक माना गया है और उसकी इच्छा का विरोध न होने पर भी यह (अन्यत्र की आमदनी) स्त्री-धन होती है।

पञ्चमे यत्र लेखेन स्वेच्छापत्रेण वा स्त्रियै।
पत्या दत्तस्तदाजीवमायस्तु निजसंपदः॥ ८५२॥
दत्ता संपत्तथान्यस्मै तत्र तूकायसञ्चयः।
तेन क्रीतान्यसंपच्च स्त्रीधनं स्यात्सुनिश्चितम्॥ ८५३॥

पाँचवीं अवस्था में जहां पर पति ने लेख (deed) से या इच्छापत्र (will) से स्त्री को उसके जीवन पर्यन्त के लिए अपनी संपत्ति की आमदनी दी हो तथा संपत्ति दूसरे को दी हो, वहां पर उस कही हुई आमदनी का संग्रह (accumulation) और उससे खरीदी दूसरी संपत्ति, निश्चय ही, स्त्री-धन होती है।

शासनेन स्वभर्तुर्हि धनात्प्राप्तभृतेश्चयः।
तेन क्रीता च संपत्तिर्विधवायाः स्त्रिया धनम्॥ ८५४॥

डिग्री के द्वारा अपने पति की संपत्ति से पाई आजीविका का संग्रह और उससे खरीदी संपत्ति विधवा स्त्री का स्त्री-धन होती है।

षष्ठे विधवया यत्र दायाप्तपतिसंपदः।
ऋत आयात्कृता वृद्धिस्तत्र सा न स्त्रिया धनम्॥ ८५५॥

छठी अवस्था में जहां पर विधवा ने दाय में पाई पति की संपत्ति की आमदनी को छोड़कर (अन्य प्रकार से) (उसकी) वृद्धि की हो, वहां पर वह संपत्ति स्त्री-धन नहीं होती है।

व्ययितोऽधवया वान्यमितस्वाम्यस्त्रिया स्थिरः।
दायार्थश्चेत्तदा तस्य न्याय्यत्वस्य तु सिद्धये॥ ८५६॥
आवश्यकत्वं निम्नोक्तकारणानां मतं बुधैः।
न्याय्यावश्यकताभावः क्रेतुर्बाध क्रयो ध्रुवम्॥ ८५७॥
कालोचितपरीक्षातः सिद्धे न्याय्ये हि विक्रये।
तस्मिंस्तदुत्तराणां वा प्रत्यादानां तु संमतिः॥ ८५८॥
तस्याः स्वार्थस्य सर्वस्य सर्वसंपद्गतस्य वा।
उत्सर्गः स्वीयनेदिष्ठप्रत्यादस्य कृतेऽथवा॥ ८५९॥
प्रत्यादानां कृते नूनं व्ययकाले तु संपदः।
प्रागुक्तानामभावे तु व्ययोऽमान्योऽत्र तत्कृतः॥ ८६०॥

जहां पर विधवाने या मिताधिकार वाली अन्य स्त्री ने दाय में मिले स्थिर धन को खर्च कर दिया हो, वहां पर उसके न्याय्य सिद्ध करने के लिए विद्वानों ने नीचे के

कारणों को आवश्यक माना है--न्याय्य ( legal ) आवश्यकता का होना या खरीद-दार का समयोचित जांच के द्वारा बेचने के न्याय्य सिद्ध होने पर खरीदना या उस ( बेचान ) में उसके अगले प्रत्यादों ( हकदारों–reversioners ) की संमति अथवा संपत्ति के खर्च के समय उस स्त्री के सारी ही सपत्ति में रहे सारे ही स्वार्थ ( interest ) का अपने सब से नज़दीक के प्रत्याद ( हकदार ) के लिए या प्रत्यादो ( हकदारो ) के लिए त्याग ( surrender ) । पहले कहे (कारणों) के अभाव में यहां पर उस ( विधवा या मिताधिकारिणी स्त्री ) का किया खर्च अमान्य होता है ।

प्रथमासु त्र्यवस्थासु मितस्वाम्यस्त्रिया कृतः ।
व्ययः समग्रसंपत्तेस्तदंशस्यापि मन्यते ॥ ८६१ ॥
अवस्थायां चतुर्थ्यां तु सर्वस्या एव संपदः ।
व्ययः स्वीक्रियते न्यायशास्त्रिभिर्नात्र संशयः ॥ ८६२ ॥

पहली तीन अवस्थाओं में परिमित अधिकारवाली स्त्री का किया सारी संपत्ति का या उसके कुछ भाग का भी खर्च ( alienation ) मान्य समझा जाता है; परन्तु चौथी अवस्था में न्यायशास्त्र के पण्डितों द्वारा सारी संपत्ति का खर्च ही स्वीकार किया ( मान्य ) समझा जाता है । इसमें सन्देह नहीं है ।

न्याय्यावश्यकताहेतोः कृतस्यर्णस्य शुद्धये ।
विधवा पतिसंपत्तिं व्ययितुं हि क्षमा मता ॥ ८६३ ॥

न्याय्य ( legal ) आवश्यकता के लिए किए क़र्ज को चुकाने के लिए विधवा स्त्री पति की संपत्ति को खर्च करने मे समर्थ मानी गई है ।

महाराष्ट्रमृतेऽन्यत्र दायप्राप्तं स्थिरास्थिरम् ।
मितस्वाम्याः स्त्रियस्त्वन्या विधवार्थाधिपस्य वा ॥८६४॥
दातुं लेखेन वा स्वेच्छापत्रेणाप्यक्षमा मताः ।
मैताक्षरेष्वशक्तास्ता महाराष्ट्रेऽपि निश्चितम् ॥ ८६५ ॥

बंबई–प्रान्त को छोड़कर दूसरी जगह हकदारी में पाये अचल और चल धन को परिमित अधिकार वाली दूसरी स्त्रियां या धनके स्वामी की विधवा लेख ( deed ) से या अपने इच्छापत्र ( will ) से भी देने में असमर्थ मानी गई है और मिताक्षरा को माननेवालों में तो वे बंबई प्रान्त मे भी, निश्चय ही, ( लेख या इच्छापत्र से देने में ) असमर्थ होती हैं ।

मायूखेषु मताः शक्तास्ता दायाप्तं चलं धनम् ।
विक्रेतुमुपहर्तुं वा व्ययितुं वान्यरीतितः ॥ ८६६ ॥
अक्षमाः किन्तु ता दातुमिच्छापत्रेण तद्धनम् ।
अवशिष्टं तदन्ते च पूर्णांशस्यान्तिमस्य हि ॥ ८६७ ॥

याति नेदिष्ठदायादं तथा पुत्रैः सहांशने।
प्राप्तं ताभिश्चलं वित्तं प्रागुक्तेन समं मतम्॥ ८६८॥

व्यवहारमयूख को माननेवालों में वे ( परिमित अधिकार वाली स्त्रियां और धन के मालिक की विधवा ) हकदारी में पाये चल ( अस्थावर ) धन को बेचने को, उपहार में देने को अथवा अन्य प्रकार से खर्च करने को समर्थ मानी गई हैं। परन्तु वे उस धन को इच्छापत्र से देने में असमर्थ होती हैं। और उन ( स्त्रियों ) के मरने पर बाकी रहा (धन) अन्तिम पूर्ण स्वामी के सब से नजदीकी हकदार को मिल जाता है। फिर उनके द्वारा पुत्रों के साथ हिस्सा करने में पाया चल धन पहले कहे हकदारी में पाये धन के समान ही माना गया हैं।

मितस्वाम्याः स्त्रियो दाये संप्राप्तं तु स्थिरास्थिरम्।
तदंशं वाऽक्षमा दातुमिच्छापत्रेण निश्चितम्॥ ८६९॥

परिमित अधिकार वाली स्त्रियां हकदारी में मिली अचल या चल संपत्ति को या उसके कुछ भाग को इच्छापत्र के द्वारा देने में, निश्चय ही, असमर्थ होती हैं।

केवलं दानधर्माभ्यामथवा न्यायकर्मणे।
दायाप्तार्थव्यये शक्ता मितस्वाम्याः स्त्रियः खलु॥ ८७०॥
श्राद्धं वाऽन्त्येष्टिकृत्यं हि मृतवित्ताधिकारिणः।
आवश्यकत्वतो ग्राह्यो विबुधैर्दानधर्मयोः॥ ८७१॥
मृतोऽर्थस्याधिपो बद्ध आसीद्येषां कृते पुनः।
विधातुं धर्मकर्माणि तेषां श्राद्धादिकं तथा॥ ८७२॥
पत्यात्मशुभदं कर्म ग्राह्यं पूर्वोक्तयोर्बुधैः।
प्रायोऽनावश्यकत्वेन हेयत्वेऽपि सुनिश्चितम्॥ ८७३॥

परिमित अधिकार वाली स्त्रियां, निश्चय ही केवल दान ( charity ) और धर्म ( religious ) कामों के लिए अथवा न्याय ( legal ) के काम के लिए दाय में प्राप्त किये, धन को खर्च कर सकती हैं। विद्वानों को मरे हुए धन के स्वामी के श्राद्ध को या और्ध्वदैहिक कर्म को, ( उनके ) आवश्यक होने से, दान और धर्म में लेना चाहिए। फिर विद्वानों को मरा हुआ धन का स्वामी जिनके लिए धर्म कृत्य करने को बाध्य था, उनका श्राद्ध आदि और पति की आत्मा का कल्याण करनेवाला काम, निश्चय ही अधिकतर अनावश्यक ( unessential ) होने से त्याज्य होने पर भी, पहले कहे दोनों ( दान और धर्म ) में लेना चाहिए।

प्रागुक्तावश्यकेभ्यस्तु कृत्येभ्योऽखिलसंपदम्।
अल्पायामल्पमूल्यां वा विक्रेतुं सा क्षमा परम्॥ ८७४॥
अनावश्यककृत्येभ्यः शर्मकृद्भ्यस्तु सा क्षमा।
इयत्तां संपदोदृष्ट्वोचितांशं व्ययितुं ततः॥ ८७५॥

वंशस्यावस्थया यत्र तद्व्ययश्चापि नोचितः ।
व्ययितुं तत्र साऽशक्ता तन्मात्रामपि संपदम् ॥ ८७६ ॥

पहले कहे ज़रूरी ( essential or obligatory ) कामों के लिए तो वह ( परिमित अधिकार वाली स्त्री ) कम आमदनी वाली या कम मूल्य की सारी ही संपत्ति को बेच सकती है । परन्तु कल्याणकर अनावश्यक ( ग़ैर ज़रूरी--unessential or unobligatory ) कामों के लिए वह ( स्त्री ) संपत्ति की हैसियत को देखकर उसमें से उचित अंश खर्च कर सकती है । जहां पर वंश की अवस्था ( circumstance ) से ( कुछ अंश का ) खर्च ( भी ) उचित न हो, वहां पर वह उतनी संपत्ति को भी खर्च नहीं कर सकती ।

मृतस्यार्थाधिपस्यात्र ऋणशोधकृतेऽपि सा ।
विक्रये संपदः शक्ता तत्कर्मावश्यकं यतः ॥ ८७७ ॥

यहां मरे हुए धन के स्वामी के कर्ज को चुकाने के लिए भी वह ( स्त्री ) संपत्ति को बेच सकती है; क्योंकि वह काम ज़रूरी होता है ।

आयस्तु संपदो ज्ञेयः स्त्रिया एव धनं बुधैः ।
तत्प्रयोगस्तदायत्तः कृत्येष्वेतादृशेष्वतः ॥ ८७८ ॥

विद्वानों को संपत्ति की आमदनी को स्त्री का ही धन जानना चाहिए । इसलिए ऐसे ( पहले कहे ) कामों में उस ( आमदनी का प्रयोग ) उस ( स्त्री ) के अधीन होता है ।

प्रागुक्ता यत्र पोषार्हा एव तत्र न ताः क्षमाः ।
संपत्तिं स्वाम्यतो बाह्यां व्ययितुं धर्मकर्मणे ॥ ८७९ ॥
तदर्थं यत्र नो वृत्तौ प्रागेवार्थः समर्पितः ।
तत्राभियोगतो वृत्तौ तास्तं योजयितुं क्षमाः ॥ ८८० ॥

जहां पर पहले कही ( स्त्रियां ) केवल भरण–पोषण की ही हकदार हों, वहां पर वे अधिकार से बाहर रही संपत्ति को धर्म के कामों के लिए खर्च नहीं कर सकतीं । तथा जहां पर पहले ही उस ( धर्म--कृत्य ) के लिए वृत्ति ( पोषणार्थ मिलनेवाले धन ) में धन नहीं दिया गया हो, वहां पर वे मुकद्दमे के द्वारा वृत्ति में उसे जुड़वा सकती हैं ।

दानधर्मौ विनान्यत्र मितस्वाम्याः स्त्रियः खलु ।
व्ययितुं दायसंप्राप्तां संपदं केवलं क्षमाः ॥ ८८१ ॥
सति प्रयोजने संपल्लाभार्थमथवा पुनः ।
अत्र प्रयोजनाज्ज्ञेयं संपन्नाशभयादिकम् ॥ ८८२ ॥

परिमित अधिकार वाली स्त्रियां निश्चय ही उत्तराधिकार में पाई संपत्ति को दान और धर्म के कामो ( cheritable and religious acts ) के अतिरिक्त दूसरी

जगह केवल प्रयोजन होने पर अथवा फिर संपत्ति के लाभ के लिए खर्च कर सकती है। यहां पर प्रयोजन से संपत्ति के नाश का भय आदि समझना चाहिए।

**न्याय्यावश्यकतार्थं वा लाभार्थं संपदः कृतः ।**
**व्ययस्ताभिस्तु बध्नाति प्रत्यादानपि संपदः ॥ ८८३ ॥**

उन ( स्त्रियों ) के द्वारा न्याय्य ( legal ) आवश्यकता के लिए या संपत्ति के लाभ के लिए किया खर्च ( उस ) संपत्ति के प्रत्यादों ( reversioners ) को भी बांध लेता है।

**यत्र न्याय्यो व्ययो नूनं संपदस्तत्र प्राक्तनः ।**
**कुप्रबन्धो न बाधादः क्रेतुर्न्याय्ये क्रये पुनः ॥ ८८४ ॥**

जहां पर संपत्ति का बेचान न्याय्य ( legal ) हो, वहां पर पहले का ( संपत्ति का ) कुप्रबन्ध खरीदने वाले की न्याय्य ( उचित ) खरीद में बाधा नहीं डालता। ( अर्थात्—उसकी खरीद न्यायोचित ही मानी जाती है। )

**न्याय्यावश्यकतायां च प्रबन्धार्थं तु संपदः ।**
**तद्दायाप्त्यर्थमथवा राजपत्रग्रहाय हि ॥ ८८५ ॥**
**राजस्वस्याप्रदत्तस्य दानायाथ मृते पुनः ।**
**धनेशेऽदत्तभाटार्थलब्धशासनहेतवे ॥ ८८६ ॥**
**ताभिराधीकृता संपद्विक्रीता वाऽत्र मन्यते ।**
**चेन्नापरं भवेद् द्रव्यं तदर्थं हि सुनिश्चितम् ॥ ८८७ ॥**
**दानाभावे च संपत्तेर्हठाद्विक्रयसंभवः ।**
**संपत्तेः कुप्रबन्धस्तु तत्कृतो नाऽत्र बाधकः ॥ ८८८ ॥**
**तावद्यावन्न तत्क्रेतुराधेरादातुरेव वा ।**
**संपर्कः कुप्रबन्धे नो निश्चयेन प्रमाणितः ॥ ८८९ ॥**

न्याय्य ( lagal ) आवश्यकता के लिए, संपत्ति के प्रबन्ध के लिए अथवा उसके हक को प्राप्त करने के लिए राजपत्र ( letter of administration or succession certificate) के लेने के लिए नहीं दिये हुए राज—कर ( Govern-ment revenue ) के देने के लिए और धनके स्वामी के मरने पर नहीं दिए हुए भाड़े ( rent ) के लिए पाई डिग्री के लिए उन ( मिताधिकार वाली ) स्त्रियों द्वारा गिरवी रक्खी या बेची हुई संपत्ति, यदि निश्चत ही उसके लिए दूसरी संपत्ति न हो और ( उनके ) नहीं देने पर संपत्ति के जबरदस्ती बेचे जाने का संभव हो तो, यहां पर, मानली जाती है। उस ( स्त्री ) का किया संपत्ति का कुप्रबन्ध उसमें तब तक बाधक नहीं होता, जब तक कि खरीदने वाले या गिरवी लेनेवाले का लगाव कुप्रबन्ध में निश्चय रूपसे, प्रमाणित न कर दिया जाय।

राजस्वं भाटकं वापि धनेशमरणान्तजम् ।
तत्संपदायतो देयं स्त्रिया नो मूलसंपदः ॥ ८८० ॥

स्त्री को धन के स्वामी के मरने के बाद का राजस्व (Government revenue) और किराया (rent) उसकी संपत्ति की आमदनी से देना चाहिए मूल संपत्ति से नहीं।

धनेशमृतिपर्यन्तमदत्तं तेन भाटकम् ।
राजस्वं चात्र दातव्यं संपत्तेर्मूलवित्ततः ॥ ८८१ ॥

धन के स्वामी के मरण पर्यन्त का नहीं दिया किराया ( भाड़ा-rent ) और राज-कर ( Government revenue ), यहां पर, संपत्ति के मूल धन से देना चाहिये ।

विक्रेतुं संपदं शक्ताः पोषाय स्वात्मनश्च ताः ।
बद्धो धनेशः पोषाय येषां तेषां कृतेऽथवा ॥ ८८२ ॥
तत्कुटुम्बकृते जातमृणं दातुमथो पुनः ।
पितामह्यम्बिकाऽनूढकन्याद्याः स्युरिहादृताः ॥ ८८३ ॥

वे ( मिताधिकार वाली ) स्त्रियां अपनी आत्मा के भरण-पोषण के लिये अथवा जिनके भरण-पोषण के लिये धन का स्वामी बँधा ( जिम्मेवार ) था उनके लिये या फिर उस ( धन के स्वामी ) के कुटुम्ब के लिए हुए ऋण के देने के लिये संपत्ति को बेच सकती हैं। इस ( धन ) के स्वामी के कुटुम्ब में दादी, माता और क्वारी कन्या आदि मानी जाती हैं।

पुनस्तास्तां क्षमा आधीकर्तुं विक्रेतुमत्र वा ।
वंशकन्याविवाहाय मृतस्यार्थाधिपस्य तु ॥ ८८४ ॥
तासु ग्राह्या सुता पौत्री प्रपौत्र्यर्थाधिपस्य वा ।
पैतृव्यस्य सुताद्याश्च यास्तदर्थाश्रिताऽपराः ॥ ८८५ ॥

फिर वे ( परिमित अधिकार वाली ) स्त्रियां यहां पर मरे हुये धन के स्वामी के वंश की कन्याओं के विवाह के लिए उस ( संपत्ति ) को गिरवी रखने व बेचने में समर्थ होती हैं। उन ( वंश की कन्याओं ) में धन के स्वामी की लड़की, पोती, परपोती और भतीजे की लड़की आदि तथा जो दूसरी ( कन्यायें ) उस ( धन के स्वामी ) के धन के आश्रित हों लेनी चाहिए।

पितृदायहरायाश्चेत्कन्यायास्त्वप्रतिष्ठितः ।
भर्ता तर्हि क्षमा सा स्वां तेनोद्वाहयितुं कनीम् ॥ ८८६ ॥
पतिदायहराः किन्तु विधवा न क्षमा मताः ।
तेनोद्वाहयितुं स्वीया दौहित्रीस्तु कथञ्चन ॥ ८८७ ॥

पिता का दाय-धन पानेवाली कन्या का पति यदि गरीब हो, तो वह उस

( धन ) से अपनी कन्या का विवाह कर सकती है। परन्तु पति का दाय-धन पानेवाली ( उसकी ) विधवा स्त्री उस ( धन ) से अपनी नवासियों का विवाह किसी तरह भी नहीं कर सकती।

स्वकन्योपयमे शक्ता उपहर्तुं यथोचितम्।
जामात्रे वाथ कन्यायै दायाप्तधनतोऽधवाः ॥ ८९८ ॥
गर्भाधानाय गच्छन्त्यै पुत्र्यै पतिगृहं प्रति।
तथैवोपहृतौ शक्तास्ता दायाप्तधनाद् ध्रुवम् ॥ ८९९ ॥
क्षमास्ताश्च पुरैवोक्ताः संपत्तेराधिविक्रये।
संपद्धिताय तस्मिंश्च तस्या रक्षाकृते तु यः ॥ ९०० ॥
अभियोगव्ययो यश्च तस्या जीर्णोद्धृतौ पुनः।
स ग्राह्यो न तु तद्वृद्धिसंस्काराभ्यां कृतो व्ययः ॥ ९०१ ॥

विधवा स्त्रियां दाय में पाये पति के धन से अपनी कन्या के विवाह में दामाद को या कन्या को उचित ( reasonable ) उपहार दे सकती है। वैसे ही गौने के लिए पति के घर को जाती हुई कन्या को भी, निश्चय ही, दाय में पाये धन से उपहार दे सकती हैं। तथा वे पहले ही संपत्ति के हित ( benefit ) के लिए ( दाय में पाई ) संपत्ति के गिरवी रखने या बेचने में समर्थ कही गई हैं। उस ( संपत्ति ) के हित में, जो उस संपत्ति की रक्षा के लिये मुकद्दमे में या जो उसके जीर्णोद्धार में खर्च हो, वही लेना चाहिए उस ( संपत्ति ) की वृद्धि ( development ) या संस्कार ( improvement ) के लिए किया खर्च नहीं लेना चाहिए।

यत्र चैकाधिका भार्यास्त्यक्त्वा भर्ता मृतः पुनः।
तत्र तास्सहवासिन्य इव दायमवाप्नुयुः ॥ ९०२ ॥
तास्वेकस्यां मृतायां तद्भागः पृक्तावशिष्टितः।
याति तस्याः सपत्नीश्च किन्तु ताः स्युः क्षमा ध्रुवम् ।९०३।
विभज्य संपदं पत्युरादातुं येन ताः पुनः।
पृथग्रूपेण प्रत्येकं सममायमवाप्नुयुः ॥ ९०४ ॥

फिर जहां पर पति एक से अधिक पत्नियां छोड़कर मरा हो, वहां वे साथ रहनेवालियों की तरह दाय-धन पाती हैं। उनमें से एक के मरने पर उसका भाग पृक्तावशिष्ट ( साझेदारों में पीछे बचने वाले के ) न्याय ( right of survivorship ) से उसकी सपत्नियों को मिलता है। परन्तु वे निश्चय ही पति की संपत्ति को बांटकर ले सकती हैं, जिससे कि वे प्रत्येक अलग-अलग रूप से बराबर-बराबर आमदनी पा सकें।

कुर्वत्यः साहचर्येण व्यवस्थां ताः क्षमा मताः।
अनिवार्यऋणोद्धृत्यै व्ययितुं सर्वसंपदम् ॥ ९०५ ॥

एकाकिन्यः परं ता नो क्षमाः स्युर्व्ययितुं धनम् ।
न्याय्यावश्यकताहेतोः कृतर्णस्यापि शुद्धये ॥ ६०६ ॥
यतो वियुक्ता अप्येताश्छेत्तुं स्वांशव्ययेन नो ।
स्वार्थं पृक्तावशिष्टानां सपत्नीनां क्षमा मताः ॥ ६०७ ॥
संमत्यैव च तास्तासां व्यये शक्ता अथो पुनः ।
शक्ताश्चेत्प्रार्थिता दद्युरन्यास्तां नाविवेकतः ॥ ६०८ ॥
पृक्ताऽवशिष्टिस्वाम्यं तु ताश्च त्यक्तुं मिथः क्षमाः ।
सत्येवं प्रतिषेद्धुं ता न शक्ताः स्युः कदाचन ॥ ६०६ ॥
कयापि व्ययमानेंऽशे प्रत्यादः किन्तु निश्चितम् ।
समर्थस्तन्निषेधे यत्स तत्त्यागान्न वञ्च्यते ॥ ६१० ॥

साथ होकर ( पति की संपत्ति का ) प्रबन्ध करती हुईं वे जरूरी ऋण ( debt contracted for necessity ) के चुकाने के लिए सारी संपत्ति को खर्च ( alienate ) कर सकती हैं । परन्तु अकेली वे धन को न्याय्य आवश्यकता के लिए किये कर्जे की शुद्धि के लिए भी खर्च नहीं कर सकतीं; क्योंकि अलग हुई भी वे अपने हिस्से के खर्च कर देने के द्वारा साझेदारों मे पीछे बची सपत्नियों के स्वार्थ को नष्ट करने को समर्थ नहीं मानी गई हैं । वे उनकी संमति से ही खर्च कर सकती हैं या फिर यदि प्रार्थना करने पर भी अन्य सपत्नियां अविवेक के कारण ( unreasonably ) उस (संमति) को न दें तो ( खर्च करने में ) समर्थ होती हैं । परन्तु वे ( सपत्नियां ) साझेदारों में पीछे जीवित बचने से मिलने वाले अधिकार को आपस में छोड़ सकती हैं और ऐसा होने पर वे किसी के द्वारा अपने हिस्से के खर्च किये जाने पर रोकने में कभी समर्थ नहीं होतीं । परन्तु प्रत्याद ( reversioner ) निश्चय ही, उस ( खर्च ) का निषेध करने में समर्थ होता है; क्योंकि वह उनके ( आपस के हक के ) छोड़ देने से ( अपने अधिकार से ) वञ्चित नहीं किया जा सकता ।

सत्यावश्यकभावे तु मितःस्वाम्याः स्त्रियोऽथवा ।
धनेशविधवाः शक्ता आधौ वा विक्रये ध्रुवम् ॥ ६११ ॥
दायसंप्राप्तसंपत्तेः स्वार्थं चाप्यथ तद्धितम् ।
रक्षन्त्यः पूर्णरूपेण प्रत्यादस्य हितं तथा ॥ ६१२ ॥

आवश्यकता होने पर तो परिमित अधिकार वाली स्त्रियां या संपत्ति के स्वामी की विधवायें अपने स्वार्थ की, उस ( संपत्ति ) के हित की और प्रत्याद ( reversioner ) के हित की पूर्णरूप से रक्षा करती हुईं, निश्चय ही, दाय में पाई संपत्ति को गिरवी रखने या बेचने में समर्थ होती हैं ।

यत्र ताश्च तथा क्रेता द्वावपि न्यायवर्तिनौ ।
तत्राधिविक्रयेऽर्थस्य ताः स्वतन्त्रा मनाङ्मताः ॥ ६१३ ॥

जहां पर वे ( स्त्रियां ) और खरीददार दोनों ही न्याय्य मार्ग में स्थित हों, वहां पर ( उपर्युक्त ) संपत्ति के गिरवी रखने या बेचने में वे ( स्त्रियां ) कुछ--कुछ स्वतन्त्र मानी गई हैं।

कर्तेवात्र कुटुम्बस्य पत्युर्दायहराधवा।
प्रत्यादे शुद्धचित्ता तूचितं स्वातन्त्र्यमर्हति ॥ ६१४ ॥

यहां पर कुटुम्ब के कर्ता ( manager प्रबन्धक ) के समान, प्रत्याद के प्रति शुद्ध चित्तवाली, पति का दाय-धन पानेवाली, विधवा उचित स्वतन्त्रता की पात्र होती है। ( अर्थात्--प्रबन्धक के समान ही वह विधवा भी उस संपत्ति को गिरवी रखने या बेचने में एक हद तक स्वतन्त्र होती है )।

मितस्वाम्याः स्त्रियः स्वार्थं व्ययितुं नितरां क्षमाः।
परं यतेरन् यदि ताः संपत्तेराधिविक्रये ॥ ६१५ ॥
तर्हि तद्ग्राहकः पूर्वं परीक्ष्यावश्यकीं दशाम्।
तद्गतां बन्धकीकुर्यात्क्रीणीयाद्वाथ तां यतः ॥ ६१६ ॥
तदर्थमभियोगे तु स एवोत्तरदो मतः।
न्याय्यावश्यकताया हि वास्तविक्यास्तु सिद्धये ॥ ६१७ ॥
तदर्थग्रहणात्पूर्वं कृतया वानुसंधया।
आवश्यक्योपलब्धेस्तु निश्चितायाः सुसिद्धये ॥ ६१८ ॥

परिमित अधिकार वाली स्त्रियां ( दाय में पाई संपत्ति में के ) अपने स्वार्थ को पूर्णरूप से व्यय ( dispose ) कर सकती हैं। परन्तु यदि वे ( उक्त ) संपत्ति के गिरवी रखने या बेचने का यत्न करें, तो उस ( संपत्ति ) का लेने वाला पहले उस ( गिरवी रखने या बेचने ) में रही आवश्यकता की परीक्षा करके उसको गिरवी ले या खरीदे; क्योंकि उस (संपत्ति) के लिए मुकद्दमा होने पर वही वास्तविक न्याय्य आवश्यकता को पूरीतौर से सिद्ध करने के लिए या उस संपत्ति के लेने के पहले किये अनुसन्धान से निश्चित आवश्यकता की मौजूदगी की सिद्धि के लिए उत्तरदाता माना गया है।

तस्यावश्यकभावस्य सिद्ध्यैवासौ क्षमो भवेत्।
गृहीतायास्तु संपत्तेरधिकारेऽत्र नान्यथा ॥ ६१९ ॥
अथवा तद्ग्रहात्पूर्वं कृतया त्वनुसंधया।
तद्व्ययावश्यकत्वं तु ज्ञात्वा क्रीतेति सिद्धितः ॥ ६२० ॥

वह (खरीदने या गिरवी रखने वाला) उस ( खर्च ) की आवश्यकता होने की सिद्धि से ही, यहां पर, ली हुई संपत्ति के अधिकार में समर्थ होता है, अन्य प्रकार से नहीं। अथवा उस ( संपत्ति ) के लेने के पहले की खोज से उस ( संपत्ति ) के

खर्च की आवश्यकता को मालूम करके ही खरीदी थी—इस बात की सिद्धि से ( अधिकार में समर्थ ) होता है ।

जनितः कुप्रबन्धेन मितस्वाम्यस्त्रिया अपि ।
स आवश्यकभावोऽर्थाऽऽदाने तस्य न बाधकः ॥९२१॥
परं चेत्कारणं सोऽपि कुप्रबन्धे स्वयं भवेत् ।
तर्हि तस्य क्रयो बाधिग्रहोऽन्याय्यो मतो बुधैः ॥९२२॥

परिमित अधिकार वाली स्त्री के द्वारा भी किये कुप्रबन्ध से उत्पन्न हुई वह आवश्यकता उस ( खरीददार ) के संपत्ति के लेने में बाधक नहीं होती । परन्तु यदि वह ( खरीद ने वाला ) खुद भी ( उस ) कुप्रबन्ध मे कारण हो, तो उसका खरीदना या गिरवी रखलेना विद्वानों ने अनुचित माना है ।

मूल्यं हि संपदो दत्तमुपयुक्तं न वा स्त्रिया ।
कार्यस्यावश्यकस्यैव पूर्त्यै भारी न तत्र सः ॥ ९२३ ॥

संपत्ति का दिया हुआ मूल्य स्त्री ने आवश्यक काम के पूर्ण करने में ही काम में लिया या नहीं उस ( बात ) में वह ( खरीददार ) जिम्मेदार नहीं होता ।

प्रमाणयोरभावे तूभयोः प्रागुक्तयोरिह ।
मिताधिकृतया नार्या कृतस्यार्थव्ययस्य तु ॥ ९२४ ॥
न्याय्यत्वसिद्धये तस्मिन्नर्थे स्वार्थवतां ननु ।
अनिरस्तं मतं मान्यं प्रत्यादानां मतं पुनः ॥ ९२५ ॥

फिर पहले कहो दोनों बातों ( वास्तविक आवश्यकता की सिद्धि या खरीद ने के पहले की पूछ--ताछ से आवश्यकता के प्रतीत होने की सिद्धि ) के अभाव मे, यहांपर, परिमित अधिकार वाली स्त्री द्वारा किये संपत्ति के खर्च के औचित्य की सिद्धि के लिए निश्चय ही उस संपत्ति में स्वार्थ रखनेवाले प्रत्यादों ( reversioners ) का, ( दूसरे के द्वारा ) खण्डित नहीं किया गया, मत मान्य माना गया है ।

अनुमत्यां न नेदिष्ठप्रत्यादस्यैव सिध्यति ।
न्याय्यत्वं स्त्रीकृतस्याऽत्र दायाप्तार्थव्ययस्य तु ॥ ९२६ ॥
तद्व्ययस्यानिवार्यत्वमात्रं तेनानुमीयते ।
परं स्त्र्यन्तेऽभियोक्तुं स्यात्प्रत्यादो वास्तवः क्षमः ॥९२७॥
तत्कृतेऽथ स एवात्रान्याय्यत्वं तस्य साधयेत् ।
तेनैवानुमते पूर्वं तद्व्यये त्वक्षमोऽत्र सः ॥ ९२८ ॥
छलाबाधामनुमतिं यावन्नासौ प्रमाणयेत् ।
क्र तैवैवं सति पुनस्तत्प्रमाणोत्तरप्रदः ॥ ९२९ ॥

सब से नजदीक के प्रत्याद की अनुमति से ही यहां पर स्त्री द्वारा हकदारी में

पाये धन के खर्च का उचित होना सिद्ध नहीं होता। उससे केवल उस खर्च के आवश्यक होने का अनुमान होता है। परन्तु ( उस ) स्त्री के मरने पर वास्तविक प्रत्याद ( हकदार ) उसके लिए मुकद्दमा चला सकता है। और ऐसे स्थान पर उसी ( प्रत्याद ) को उस ( खर्च ) का अनुचित होना सिद्ध करना होता है। उस प्रत्याद के द्वारा ही पहले उस खर्च की अनुमति दे दीजाने पर वह इस कार्य ( मुकद्दमा चलाने ) में तब तक असमर्थ होता है, जब तक वह ( अपनी ) अनुमति को धोखे से प्राप्त की गई प्रमाणित न करदे। तथा ऐसा ( उसका धोखे से पाना सिद्ध ) होने पर खरीददार को ही उस प्रमाण का जवाब देना होता है।

साधारण्येन सर्वेषां प्रत्यादानां हि संमतिः।
भवेदावश्यकी किन्तु यत्र सा स्यादसंभवा ॥ ६३० ॥
तत्र त्वधिकसंख्यानां तेषां ग्राह्या पुरैव सा।
अर्थव्ययात्तदन्ते वाऽनुमीयेतात्र निश्चितम् ॥ ६३१ ॥
येनादानप्रदानस्य हिन्दुन्यायेन युक्तता।
व्यये कस्मिन्नपि पुनर्वैशिष्ट्यात्स्याद्विशिष्टता ॥ ६३२ ॥

साधारण तौर से सारे ही प्रत्यादों की संमति आवश्यक होती है। परन्तु जहां पर वह असंभव हो, वहां पर अधिक संख्यावाले उन ( प्रत्यादों ) की वह ( संमति ) संपत्ति के व्यय से पहले ही या उसके बाद ले लेनी चाहिए; जिससे कि, यहां पर, निश्चय ही, हिन्दून्याय से लेन देन का औचित्य अनुमान करलिया जा सके। फिर किसी व्यय ( alienation ) में खास बात होने से खास तरीका हो सकता है।

संमतिश्चापि मान्यात्र ज्ञेयं ज्ञात्वा तु तद्गतम्।
चेद्दत्ता, व्ययलेखे तत्साक्ष्यं मान्यं न केवलम् ॥ ६३३ ॥

यहां पर संमति भी यदि उसके संबन्ध की जानने लायक ( सारी ही ) बातों को जान कर दी गई हो, तो मान्य होती है। व्यय के लेख ( deed ) में उन ( प्रत्यादों ) का केवल साक्ष्य ( attestation ) ही मान्य नहीं होता।

मूलस्य विक्रये चाधौ स्त्रीप्रत्यादानुमोदनम्।
नालं तत्रानिवार्या स्यात्पुंप्रत्यादानुसंमतिः ॥ ६३४ ॥
महाराष्ट्रे मता पूर्णस्वाम्या नार्यः कुटुम्बजाः।
इष्टा नेदिष्ठ-पुंनारी-प्रत्यादाज्ञा त्विहापि हि ॥ ६३५ ॥

मूल संपत्ति के बेचने या गिरवी रखने में स्त्री प्रत्याद का अनुमोदन पर्याप्त नहीं होता। वहां पर पुरुष-प्रत्याद की संमति भी आवश्यक होती है। बंबई-प्रान्त में ( धन के स्वामी के ) कुटुम्ब में उत्पन्न हुई स्त्रियां पूर्णाधिकारवाली मानी जाती हैं। परन्तु वहां पर भी सब से नजदीक के स्त्री और पुरुष दोनों प्रत्यादों की आज्ञा ( अनुमति ) की आवश्यकता होती है।

परं तया प्रदत्ता चेदनुज्ञाऽर्थस्य विक्रये ।
आधौ वा न भवेच्छक्ता तर्हि सा तद्विरोधने ॥ ६३६ ॥

परन्तु यदि उस ( स्त्रीप्रत्याद ) ने संपत्ति के बेचने या गिरवी रखने में संमति दे दी हो, तो वह उसका विरोध करने में समर्थ नहीं होती ।

न स्वाधीनाः स्त्रियः शास्त्रे संमताः क्वापि निश्चितम् ।
यस्मात्तस्मादनुज्ञा नो तासां निर्णयकारिणी ॥ ६३७ ॥

क्योंकि शास्त्र में निश्चय ही कहीं भी स्त्रियां स्वाधीन नहीं मानी गई हैं: इसलिए उनकी संमति ( उपर्युक्त कार्य में ) निर्णय करनेवाली नहीं होती ।

व्ययस्त्वर्थस्य विहितः स्त्रीप्रत्यादानुमोदनात् ।
अनुज्ञानाच्च दूरस्थपुंप्रत्यादस्य निश्चितम् ॥ ६३८ ॥
पुंप्रत्यादं तु नेदिष्ठं बाधते न कदाचन ।
दायामार्थव्ययस्यात्र स्त्रीकृतस्य विरोधने ॥ ६३९ ॥

स्त्री--प्रत्यादों ( female reversioners की संमति से और निश्चय ही दूरके पुरुष प्रत्याद ( distant male reversioners ) की संमति से किया संपत्ति क खर्च नजदीक के पुरुष प्रत्याद ( male reversioner ) को, यहां पर स्त्री द्वारा किये दाय में पाई संपत्ति के खर्च ( alienation ) का विरोध करने में, बाधा नहीं डालता ।

स्त्रिया नेदिष्ठप्रत्यादानुज्ञया व्ययितं धनम् ।
कृत्स्नं तदंशो वा मान्यो विहितो न्यायसंसदा ॥ ६४० ॥

प्रीवी काउंसिल ( The Privy Council ) ने ( विधवा ) स्त्री द्वारा नजदीक के प्रत्यादों ( next reversioners ) की अनुमति से किया सारी संपत्ति का या उसके अंश का खर्च मान्य कर दिया है ।

आधिविक्रयरूपाभ्यां व्ययस्त्वर्थस्य संमतः ।
पट्टतो मितकालार्थदानरूपेण वा पुनः ॥ ६४१ ॥

संपत्ति का खर्च ( alienation ) गिरवी रखने या बेचने के रूप से मान्य किया गया है, या फिर पट्टे ( lease ) द्वारा नियत समय के लिए देने के रूप से माना गया है ।

अपूर्णस्वाम्यया नार्या दत्तं वाऽधवया पुनः ।
दायात्तं हि धनं कृत्स्नं तदंशं वोपहारतः ॥ ६४२ ॥
त्यक्त्वा नेदिष्ठप्रत्यादमपरस्मै जनाय तु ।
प्रत्यादं वास्तवं नैव बाधतेऽत्र कथञ्चन ॥ ६४३ ॥
दत्तं नेदिष्ठप्रत्यादानुमतेनाऽपि चेद् ध्रुवम् ।
व्यय एव यतस्तत्तु न्याय्यावश्यकसाधकम् ॥ ६४४ ॥

परिमित अधिकार वाली स्त्री-द्वारा या विधवा द्वारा दाय में पाया सारा धन या उसका कुछ भाग, नजदीक के प्रत्याद को छोड़कर, अन्य पुरुष को उपहार-रूप से दिया जाने पर भी, चाहे वह निश्चय ही नजदीक के प्रत्याद की अनुमति से ही दिया गया हो, यहां पर, वास्तविक ( actual ) प्रत्याद को किसी तरह बाधा नहीं पहुचाता। क्योंकि वह ( नजदीक के प्रत्याद की संमति ) ( धन के ) खर्च ( alie-nation ) में ही न्याय्य आवश्यकता की साधक होती है।

न्याय्यावश्यकता यस्मादुपहारे न मन्यते।
तस्मात्तत्र न नेदिष्ठप्रत्यादानुमतिस्त्वलम् ॥ ६४५ ॥

क्योंकि उपहार ( gift ) में न्याय्य ( lagal ) आवश्यकता नहीं मानी जाती। इसलिए वहां पर नजदीकी प्रत्याद की अनुमति पर्याप्त नहीं होती।

कृता नेदिष्ठप्रत्यादायोपदा हि स्त्रिया स्वयम्।
कृत्स्नस्य दायसंप्राप्तधनस्यात्र तु संमता ॥ ६४६ ॥
बुधैस्तत्त्यागरूपेण परं सा चेत्प्रदीयते।
कतिभ्यश्चित्प्रभूतेषु प्रत्यादेषु स्थितेष्वपि ॥ ६४७ ॥
विनाऽपरेषां संमत्या न मान्या सा प्रकीर्तिता।
दायाप्तसंपदोंऽशस्योपहृतिश्च कृता तया ॥ ६४८ ॥
प्रत्यादेभ्यः समग्रेभ्योऽप्यमान्यैवात्र संमता।
यतस्तस्या न तत्रास्ति निश्चिता त्यागरूपता ॥ ६४९ ॥

स्त्री के द्वारा स्वयं ही दाय में पाये सारे धन का सब से नजदीक के प्रत्याद के लिये उपहार में दे देना विद्वानों ने, उस स्त्री के त्याग के रूप से, मान्य माना है। परन्तु यदि वह ( उपहार ) बहुत से प्रत्यादो के मौजूद होने पर भी कुछ प्रत्यादों को ही, दूसरों की संमति के विना, दे दिया जाय, तो वह मान्य नहीं कहा है। और उस (स्त्री) के द्वारा दाय में पाई संपत्ति के कुछ भाग का सारे ही प्रत्यादों को उपहार-रूप से देना भी यहां पर अग्राह्य ही माना है। क्योंकि वहां पर ( सारी संपत्ति का उपहार न होने से ) उस ( उपहार ) में उस ( उपहार ) की निश्चित तौर से त्यागरूपता नहीं होती।

लेखेनोपहृतिर्दायप्राप्तार्थांशस्य योषिता।
कृता नेदिष्ठप्रत्यादकृते यत्रैक एव सः ॥ ६५० ॥
दत्तो विक्रयलेखेन स तेनाऽन्यजनाय च।
मान्यो नेदिष्ठप्रत्यादानुमत्यर्पितवद् ध्रुवम् ॥ ६५१ ॥
यदिप्राकथितौ लेखावुभावपि परस्परम्।
संबध्य विक्रयस्यैव स्यातामत्र प्रसाधकौ ॥ ६५२ ॥

